5.2

आचार्यविष्णुगुप्तविरचितं

# कौटलीयार्थशास्त्रम्

पञ्चटीकोपेतम्

(प्रथमभागस्य प्रथमं सम्पुटम्)

सम्पादकः

आचार्यश्रीविश्वनाथशास्त्रिदातारः

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ
[ Vol. 130 ]

# KAUṬALĪYAMARTHAŚĀSTRAM

OF

ĀCĀRYA VIṢṆUGUPTA

[ VOLUME ONE, PART ONE ]

With Five Commentaries

## 'ŚRĪMŪLĀ'

BY

T. GAṆAPATI ŚĀSTRĪ

'Vaidīkasiddhāntasaṁrakṣiṇī' & 'Jayamaṁgalākroḍapatram'

BY

ŚRĪ PAṆḌITARĀJA RĀJEŚVARA ŚĀSTRĪ DRAVIḌA

## 'JAYAMAṀGALĀ'

BY

ŚRĪ ŚAṀKARĀRYA

&

## 'NĪTINIRṆĪTI'

BY

ŚRĪ YOGGHAMĀCĀRYA

EDITED BY

ŚRĪ VIŚVANĀTHA ŚĀSTRĪ DĀTĀRA

Ex. Head of Department,
Prācīnarājaśāstrārthaśāstra-Department
Sampurnanand Sanskrit University
Varanasi



VĀRĀṆASĪ
1991

Research Publication Supervisor —
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.

[ Published under the Rare Texts Publication Scheme of Sarasvati Bhavana Library with financial assistance provided by University Grants Commission.]

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi–221 002.

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi–221 002.

First Edition, 1000 Copies
Price Rs. 140·00

Printed by—
VIJAYA PRESS,
Sarasauli, Varanasi,

सरस्वतीभवन-ग्रन्थमाला

[ १३० ]

आचार्यविष्णुगुप्तविरचितं

# कौटलीयमर्थशास्त्रम्

[ प्रथमभागस्य प्रथमं सम्पुटम् ]

म० म० टी० गणपतिशास्त्रिकृतया 'श्रीमूला'व्याख्यया

'पण्डितराजराजेश्वरशास्त्रिद्रविडकृताभ्यां 'वैदिकसिद्धान्तसंरक्षिणी'-

'जयमङ्गलाक्रोडपत्रम्'-व्याख्याभ्यां

श्रीशङ्करार्यकृतया 'जयमङ्गला'व्याख्यया

श्रीयोग्घमाचार्यकृतया 'नीतिनिर्णीति'व्याख्यया च

विभूषितम्

सम्पादकः

'शास्त्ररत्नाकर'-श्रीविश्वनाथशास्त्रिदातारः

पूर्वविभागाध्यक्षः,

प्राचीनराजशास्त्रार्थशास्त्रविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी




वाराणस्याम्

२०४८ तमे वैक्रमाब्दे    १९१३ तमे शकाब्दे    १९९१ तमे ख्रैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

▫

[ सरस्वतीभवनपुस्तकालयस्य प्रकाशनसम्बन्धिविशेषयोजनान्तर्गतं
विश्वविद्यालयानुदानायोगतः प्राप्तवित्तीयसाहाय्येन प्रकाशितम् ]

▫

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.

▫

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.

▫

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— १४०=०० रूप्यकाणि

▫

मुद्रकः—
विजय-प्रेस,
सरसोली, वाराणसी ।

# प्ररोचना

वहोःकालात् प्रतीक्ष्यमाणा दिवङ्गतैः **पण्डितराजराजेश्वरशास्त्रिद्राविडैः** सम्पादिता कौटलीयार्थशास्त्रकृतिरधुना प्रकाश्यतामानीयत इति महान्तं परितोष-मनुभवामि। आजीवनं पण्डितवर्यैरस्य महतो ग्रन्थस्य वैदिकसिद्धान्तानुसारं निर्वचने प्रायाति। तैश्च जयमङ्गलाख्या प्राचीना टीकाऽपि स्वक्रोडपत्राख्येण टिप्पणेन संवलिता। श्रीयोग्घमाचार्यप्रणीता **'नीतिनिर्णीतिनाम्नी'** प्राचीना टीका, श्रीगणपतिशास्त्रिभि-र्विरचिता **'श्रीमूला'** टीका चाप्यत्र सङ्गृहीते। आसां टीकानां समुच्चयेनार्थ-शास्त्रग्रन्थस्य गूढा अर्थाः सुखं ग्राह्याः।

खेदस्यायं विषयः पण्डितराजानां परिश्रमं तेषां जीवनकाले मुद्रणावसरं नालभत, तेषां प्रमुखैः शिष्यैः **श्रीविश्वनाथशास्त्रिदातारैः** पाण्डुलिपेष्टीकाभिः संयोजनं सादरं सपरिश्रमं च सम्पन्नम्। स्वकीया सुदीर्घतरा भूमिकाऽपि विरचिता।

अनया भूमिकया सर्वांशतः सह ऐक्यमत्यमादधानोऽपि अस्याः प्रौढिं सोपपत्ति-त्वञ्च प्रशंसितुमर्हामि। प्रस्तुतस्यार्थशास्त्रसंस्करणस्येदमेव वैशिष्ट्यं यत्तस्य निर्वचनस्य सर्वे पक्षाः समुद्घाटिताः। तेन विदुषां स्वकीयमतनिर्धारणे सौकर्यं भविष्यति। श्रीदातारशास्त्रिणो द्वौ सहयोगिनो **श्रीजगन्नाथशास्त्रितैलङ्ग-श्रीलक्ष्मीकान्तखनङ्गौ** आस्ताम्। तयोः श्रमोऽधुना सफलः।

कौटलीयमिति अभिधानमधुना विदुषां बहुतरेणादरास्पदम्। कौटलीयमित्येवा-भिधानमाद्रियन्ते बहुशो बुधाः। कुटलगोत्रे विष्णुगुप्तस्य जातत्वात् कौटल्यस्य कौटली-यस्योपपन्नत्वात्। भवतु, कौटिलीयमर्थशास्त्रं कतिभिश्चित् पाश्चात्यैः छलयुक्तिप्रधानं राजशास्त्रमिति मन्यते; किन्तु शास्त्ररीत्या समग्रपरीक्षणेन चायं भ्रम एव प्रतीयते। यतो हि भ्रम एवास्य शास्त्रस्य मूलम्। राज्ञा विद्याविनीतेनैव वर्तितव्यमिति प्रोक्तवता कौटल्येनैवमुक्तम्—**"श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगः, योगादात्मवत्ता, इति विद्यासामर्थ्यम्"**।

अनेन वचनेन स्वतःसिद्धं कौटलीयार्थशास्त्रस्य आत्मविद्यामूलत्वम् । वस्तुतो दृष्टस्यादृष्टस्य च, लौकिकस्य लोकोत्तरस्य च, दैहिकस्य आत्मिकस्य च जगतः पार्थक्यं शास्त्रकारैर्न विचीयते स्म । एतादृशोरुभयोर्युग्मयोः परस्परमुपकारित्वमेवाभिमतमस्ति । पण्डितराजकृतः श्रम इममेवार्थं समुपपादयतीति नो हर्षः ।

मन्ये, कौटलीयार्थशास्त्रस्य प्रस्तुतं संस्करणं प्राचीनराजशास्त्राध्ययने काञ्चन नूतनां सरणिं विवरिष्यति । साम्प्रतं चतुर्षु खण्डेषु विभक्तोऽयं ग्रन्थः प्रकाश्यतां गच्छतीति महते परितोषाय । अत्र संलग्नाः सर्वे पण्डिता अभिनन्दनार्हाः ।

**वाराणस्याम्,**
**मौनी-अमावास्यायाम्,**
**२०४७ वैक्रमाब्दे**
**(१५-१-१९९१ खैस्ताब्दे)**

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्राक्कथनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन सरस्वतीभवनस्थानां महत्त्वपूर्णानामप्रकाशितानां पाण्डुलिपीनां मुद्रणाय तथा दुर्लभानां मुद्रितग्रन्थानां पुनः प्रकाशनाय चैका योजना पञ्चमपञ्चवर्षीययोजनायां विश्वविद्यालयानुदानायोगसमक्षं प्रेषिताऽऽसीत्। आयोगेन च नियोजितस्य निरीक्षकमण्डलस्य संस्तुतिमनुसृत्य प्रकाश्यमानग्रन्थानां महत्तां चोररीकृत्य स्वीकृतिः प्रदत्ता। अस्यां प्रक्रियायां वर्षद्वयं व्यतीतम्। अवशिष्टयोजनावधेरल्पत्वात्, अत्रत्यप्रकाशनविभागे कार्यबाहुल्यात्, योजनायाश्च सरस्वतीभवनद्वारा प्रस्तुतत्वात् कार्यस्य शीघ्रमेव सम्पादनार्थं निम्नाङ्कितानां विश्वविद्यालयीयविदुषामेका समितिर्निर्मिता—

**अध्यक्षः**

प्रो० बदरीनाथशुक्लः ( कुलपतिः )

**सदस्याः**

१. प्रो० जगन्नाथोपाध्यायः ( पालिविभागाध्यक्षः, श्रमणविद्यासङ्कायाध्यक्षश्च )
२. श्रीव्रजवल्लभद्विवेदः ( साङ्ख्ययोगतन्त्रागमविभागाध्यक्षः )
३. डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री' (निदेशकः, अनुसन्धानसंस्थानस्य)
४. श्रीबलिरामशास्त्री भारद्वाजः ( उपपुस्तकाध्यक्षः, हस्तलिखितानुभागे )
५. श्रीजनार्दनपाण्डेयः ( सरस्वतीभवनस्थः )
६. श्रीलक्ष्मीनारायणतिवारी ( पुस्तकाध्यक्षः, समितेः संयोजकः )

संयोजकस्य श्रीलक्ष्मीनारायणतिवारिणः सततप्रयत्नेन अनया समित्या प्रकाशनार्हग्रन्थानां चयनम्, तेषां सम्पादनव्यवस्था, मुद्रणव्यवस्था च तत्परतया सम्यक् प्रारब्धा।

सम्पाद्यमानग्रन्थेषु संस्कृतपालिवाङ्मयस्य प्रायः समस्तप्रमुखविषयाणां महत्त्वपूर्णाः समुपयोगिनश्च ग्रन्थास्समावेशिताः, तत्तत्सम्पादनकार्यभारो विश्वविद्यालयस्य विद्वद्भ्यः, सम्बद्धविषयाणां कतिपयेभ्यो बहिष्ठविद्वद्भ्यश्च समार्प्यत।

अस्यामेव योजनायां प्रकाश्य प्रस्तूयत इदं कौटलीयमर्थशास्त्रं बहुभिरतिप्रसिद्धटीकाटिप्पणीसंवलितम्, शास्त्ररत्नाकरविश्वनाथशास्त्रिदातारेण सम्पादितम्।

अर्थशास्त्रं हि पूर्वाचार्यैर्भारतदेशस्य सुखशान्तिसमृद्धये त्रिवर्गोन्नतये च निर्माय राष्ट्रस्य पुरतः समुपस्थापितम्। तद् अतिविस्तृततया दुरूहं जातम्, तत्रत्याः कतिपयेंऽशा उत्सन्नकल्पा अभूवन्निति कामसूत्रादिनिर्दिष्टहेतुभिर्ज्ञायते। आचार्यः कौटल्यः सम्पूर्णम् अर्थशास्त्रं वेदञ्च अधीत्य वैदिकमर्यादाया लोकयात्रासाधनत्वञ्चानुभूय तत्सङ्ग्रहभूतमेकम् अर्थशास्त्रं निर्मितवान्। यदर्थमुपजीव्य रामराज्यं धर्मराजराज्यं चन्द्रगुप्तमौर्यराज्यं च स्वर्णयुगायते। तदिदमर्थशास्त्रं पञ्चदशाधिकरणं सार्धशताध्यायं साशीतिप्रकरणशतं षट्सहस्रश्लोकात्मकमुपलभ्यते। तस्येयं प्रतिज्ञा "पृथिव्या लाभे

**पालने च "इदमर्थशास्त्रं कृतम"** (कौ० अ० १।१) इति। तच्च सर्वेष्वपि देशेष्वद्यावधि उत्कृष्टतमं चकास्तीति सर्वैराधुनिकैर्विपश्चिदपश्चिमैरपि सत्क्रियते।

अस्यार्थशास्त्रस्य परम्परायामध्ययनाध्यापनद्वारा कतिपयाष्टीका अपि बभूवुः, याः समवलोक्य जयमङ्गलाभिधेयां टीकां **श्रीशङ्करार्यो** निर्मितवानिति तट्टीकातो ज्ञायते। इयं टीका केवलं प्रथमाधिकरणे उपलब्धा १९५८ ई० वर्षे प्रकाशिता। **श्रीगणपतिशास्त्रिभिः** १९२४ ई० वर्षे अनन्तशयने राजकीयमुद्रणालये सम्पादनपूर्वकं 'श्रीमूला'ख्या स्वरचिता टीका प्रकाशिता।

'नीतिनिर्णीति'नाम्नी टीका **श्रीयोग्घमाचार्यविरचिता** २०१६ वै० संवत्सरे मुम्बापुरीस्थभारतीयविद्याभवनतः सिन्धीजैनग्रन्थमालाद्वारा प्राकाशि। एतट्टीका-त्रितयसत्त्वेऽपि न्यायव्याकरणादिशास्त्राध्ययनपरम्परावद् अर्थशास्त्राध्ययनपरम्परा भारतदेशे समभूदिति न दृश्यते। अत उत्कृष्टतममिदमर्थशास्त्रमधिकृत्य 'प्राचीन-भारतीयशासनपद्धतिप्रभृतिष्वनेकेषु ग्रन्थेषु विद्वद्भिर्नैके आक्षेपा उद्भाविताः। यतोऽस्य अप्रामाण्यं जनेषु जागर्ति। तन्निरासाय **"विश्वविद्यालय-अनुदान-आयोगेन"** इदमनुभूतं यत् स्वसाहाय्येन पदवाक्यप्रमाणपारावारीणा विद्वांसोऽर्थशास्त्रव्याख्यानाय प्रेरणीयाः। प्रातस्स्मरणीया गुरुचरणाः पद्मभूषणादिविविधविरुदावलीसमलङ्कृताः श्रीमतः **स्व० पण्डितराजराजेश्वरशास्त्रिद्रविडमहाभागाः** संस्कृतविश्वविद्यालया-धिकारिभिः एतदर्थं सानुरोधं प्रार्थिताः। एतैर्द्वादशवर्षाधिकवर्षमर्थशास्त्रमधीत्य राजनीतिवर्गं संस्थाप्य विद्यार्थिनोऽध्यापिताः। ततः 'वैदिकसिद्धान्तसंरक्षिणो'ति नाम निधाय अर्थशास्त्रं व्याख्यातम्। प्रायः अष्टमशताब्द्यां शङ्करार्यैः(शङ्कराचार्यैः) निर्मितां 'जयमङ्गलाम्' अधिकृत्य आधुनिकविद्वदुद्भाविताः शङ्का आन्वीक्षिकीद्वारेण निरस्य क्रोडपत्रमपि व्याख्यातम्।

अधीतेषु विद्यार्थिवृन्देषु शास्त्ररत्नाकरादिभूषाभूषणैः **पण्डितश्रीविश्वनाथ-शास्त्रिदातारैरधीत्य** गुरुचरणकृतं व्याख्यानम् अन्याश्च टीका हृदयङ्गमय्य तन्निर्देशा-नुसारेण 'वैदिकसिद्धान्तसंरक्षिणी-जयमङ्गलाक्रोडपत्रयोः' सङ्कलनं सम्पादनञ्च विहितम्। एतट्टीकाद्वयोपेतं 'श्रीमूला'दिटीकात्रितयसहितमर्थशास्त्रं प्रथमाधिकरण आदितः पञ्चमाध्यायान्तं विदुषां पुरत उपायनीक्रियते। आशास्यते यद् विद्वद्वरेण्या ग्रन्थ-रत्नमिदमादितोऽन्तपर्यन्तं समवलोड्य अधीति-बोधाचरणप्रचारणैः सर्वसाधारणजनेषु रुचिमुत्पाद्य एतद्देशस्य सुखशान्तिसमृद्धये सहयोगं प्रदास्यन्ति।

विस्तृतं टीकाग्रन्थं दातारशास्त्रिभिः सङ्क्षिप्य भूमिकायां सर्वोऽपि विषयः समालोचितः, यत्र नीतिलक्षणादिकं सर्वं स्फुटीभवति, भवति च शङ्कानां समाधानमपि। विश्वस्यतोऽग्रिमं सम्पुटमप्यचिरेण प्रकाशमेष्यति।

**वाराणस्याम्,**
**कार्तिकपूर्णिमायाम्,**
**वि० सं० २०३७**
**(२२-११-१९८० खैस्ताब्दे)**

**बदरीनाथशुक्लः**
तदातीन्तनः कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

## सम्पादकीयं वक्तव्यम्

भारतवर्षस्य अभ्युन्नतिः वेदेन 'न मे स्तेनो जनपदे' इत्यादिना प्रदर्शिता। तत्परम्परा एतद्देशे पूर्वतनराज्येषु वंशपरम्परायां समुदीयते स्म। साम्प्रतं तु अस्यां शताब्द्यां विशेषतो भारतदेशे वर्तमानामशान्तिमनुरुद्धय तन्निवारणोपायं चिन्तयद्भिः श्रीगुरुदेवैः श्रीमद्भिः पण्डितराजराजेश्वरशास्त्रिद्रविडचरणैः राजशास्त्रचिन्तन-प्रचारणं विना देशे शान्तिर्न भविष्यतीति ज्ञात्वा प्रथमतो जयमङ्गलासहितः कामन्दकीय-नीतिसारः अमलनेरनगरस्थपुस्तकागारात् सम्प्राप्तः। तत्र 'विद्याप्रतिबद्धत्वाल्लोक-स्थितेः' इत्युपलभ्य श्रीचरणैः राजनीतिं पर्यालोचयितुं राजनीतिवर्गो वाराणसेये रामघट्टस्थिते व० शा० साङ्गवेदविद्यालये महाराजश्रीकाशीनरेशसान्निध्ये तत्कालीन-बिहारराज्यपालश्रीअणेकरकमलद्वारा पञ्चविंशतिवर्षेभ्यः पूर्वं संस्थापितः। तत्र गुरुवर्यं पं० स्व० हरिरामशास्त्रिशुक्ल-गणपतिशास्त्रिहेब्बार-रामचन्द्रशास्त्रिहोसमने-जयरामशास्त्रिशुक्ल-स्व० नटराजऐय्यरप्रभृतिभिः सह अहमपि प्रविष्टः। तत्र गुरुचरणैः महता श्रमेण नीतिसारः कण्ठस्थीकृत्य समुपस्थितनैकविधप्रश्नजालसमाधानपुरस्सरम् अध्यापितः। तत्र तत्र देशान्तरेषु गत्वा तैरस्माभिश्च राजशास्त्रं व्याख्यानमालाभिः संश्रावितं प्रसारितं च। सर्वेषां श्रोतॄणां रुचिं ज्ञात्वा 'राजनीतिशास्त्र का दिग्दर्शन', 'शान्ति का अग्रदूत' इति पुस्तकद्वयं प्रकाशितम्।

ततो गुरुभिः जयमङ्गलादिटीकोपेतं कौटलीयमर्थशास्त्रमध्यापितम्, तत्रोपवर्णितेन विषयेण अस्माभिः सर्वैरपि निरणायि यद् भारतदेशे वर्णाश्रमप्रधाने समेषामेकरूपता-सम्पादकं सत्त्वं धृतिभावापरपर्यायम् आसीत्, अस्ति च। एतदाश्रयं विना क्वचिदपि सुखं शान्तिः समृद्धिभ्रातृभावेन सर्वेषां सम्प्रदायानां मानवानां वाऽस्तित्वं च न भवितु-मर्हति। एतच्छास्त्रनिर्देशानुसारेण देशे विद्याप्रचारकार्यमेव नैतिकं प्राथमिकं कार्यं विदुषाम्, इति विज्ञाय अर्थशास्त्रस्य चर्चा पुनरपि चर्चिता। तत्र अनेकविधाः शङ्का आधुनिकैः समुपस्थापिताः, आन्वीक्षिकीमीमांसामर्यादया कार्यकारणभावविवेचनपुरस्सरं समाहिताः। एतदेवानुरुद्ध्य रामायण-महाभारत-पुराणादिग्रन्था अपि यदि समा-लोच्येरन्, तर्हि समाजस्य आन्ध्यं व्यपगतं भवेदिति ज्ञात्वा राजनीतिवर्गे प्रविष्टैः स्वकार्यारम्भः समालोचितः। तदानीमेव तत्कालीनकुलपतिश्रीसुरतिनारायणमणि-त्रिपाठिभिः साहाय्यं सम्प्रदाय विशेषतया प्रोत्साहिता गुरुचरणाः। ततः श्रीगौरीनाथ-शास्त्रिभिरुपकुलपतिभी राजनीतिवर्गे स्वयमुपस्थाय अर्थशास्त्रमधिकृत्य निबन्धः प्रकाशितो भवत्विति अभिप्रायः प्रकटितः। नवीनग्रन्थनिर्माणेऽस्माकं सामर्थ्यमननुभूय गुरुशिष्यसंवाद एव ग्रन्थरूपेण प्रकाशनीय इत्यपि अभ्यधायि। ततः पुनरपि आदितः अर्थशास्त्रं गुरुचरणैरध्यापितं व्याख्यानमालारूपेण। तत्र प्रथमाधिकरणे चतुर्दशा-ध्यायान्तमेव अध्ययनाध्यापनयोर्महान् समयः समतिक्रान्तः। तस्य सम्पादनं सङ्कलनञ्च

अनेन शरीरेण कर्तव्यमस्तीति गुरुचरणानामादेशः समभूत्। तमनुरुद्ध्य परिश्रम-पुरःसरम् उक्तसंवादस्य सङ्कलनम् अनेकैः वर्षैः कृतमद्य विदुषां सेवायां कथञ्चन समुपस्थापयितुं प्राभवम् ।

अर्थशास्त्रकर्ता चाणक्यस्तस्मिन् समये प्रादुर्भूतः, यत्र नीतिशास्त्रस्य विलोप-प्रसक्त्या सह देशे सत्त्वगुणस्योन्मूलनमेव प्रसक्तमासीत्। अनेनैवाचार्येण सर्वाणि शास्त्राणि चतुरो वेदानधीत्य सत्त्वोन्मूलनकारणमनुशील्य आन्वीक्षिक्या सह त्रय्यादिविद्यानां संस्थापनं कृतम्। राज्यञ्च धर्मप्रधानं व्यवस्थापितम्, यद्धि ऐतिहासिकानां मतानु-सारेणापि स्वर्णयुगायते स्म। अनेनैव सिद्ध्यति यद् अनेन आचार्येण पाटलिपुत्रमवस्थाय चन्द्रगुप्तं मौर्यं राज्यपदे समभिषिच्य स्वयं शमप्रधानः सन् सत्त्वमेव संस्थापितवान्। सोऽयमाचार्य इतः पूर्वं चतुर्विंशतिवर्षशतकपूर्वमवनीतलं भूषयामासेति न्यायवार्तिक-भूमिकाकर्तृभिः उद्धृतात् चतुर्विंशतितमतीर्थङ्करजैनाचार्यवाक्याद् उन्नीतम्। अर्थशास्त्रस्य पदानि गुरुपरम्पराध्ययनाभावाद् दुरवगाहानीति ज्ञात्वा गुरुचरणैः अर्थशास्त्रस्य टीकाः सङ्कलिताः। तासु समग्रस्य अर्थशास्त्रस्य टीका ( स्व० म० म० ) पं० त० गणपतिशास्त्रिभिः प्रणीता दृष्टा।

एते काञ्चिमण्डलपतेः श्रीमूलरामवर्ममहाराजस्य कृपापात्राणि स्वं व्याख्यानं श्रीमूलेतिनाम्ना सम्पादितवन्तः।

जयमङ्गलानाम्नी टीका मद्रप्रान्ते प्रकाशिता। इयं कामन्दकीयटीका-वाक्यसादृश्यात् प्रामाणिकत्वाच्च शङ्करार्यैरेव विरचितेति मन्यते। सापि केवलं प्रथमाधिकरण एव प्रकाशनभावं प्राप्ता। नीतिनिर्णीतिरपि केषुचित्स्थलविशेषेषु तदीयाभिप्रायं द्योतयति। सा सिन्धीजैनग्रन्थमालायामाचार्यजिनवरमुनिवरसङ्गृहीता उपलब्धा। एषैव स्वकीयपाठाख्याने सामग्री अभूत्।

एतदर्थशास्त्रस्य समस्तटीकासहितस्य प्रकाशनं अशक्यप्रायमस्तीति मन्वान एवासम्; परं श्रीजगन्नाथोपाध्याय-(पालिविभागाध्यक्षः) प्रभृतिविदुषां प्रोत्साहनमुपलभ्य वर्तमानश्रीकुलपतिभिरेतत् प्रकाशनं प्रतिज्ञायाहमादिष्टस्तदर्थम्।

अस्य समग्रस्य प्रकाशनं भागत्रयेण कर्तव्यम्। एकस्मिन् भागे सम्पुटद्वयं भविष्य-तीत्यपि निर्णीतं गुरुचरणैः, कृतस्य व्याख्यानस्य अतिदीर्घत्वात्। तेष्विदं प्रथमाधिकरणं पञ्चाध्यायात्मकं सम्पुटं प्रथमं प्रकाशितं विदुषां मनांसि रञ्जयेदित्याशास्यते।

एतत्कार्यसम्पादने श्री पू० महाराजैः श्रीविभूतिनारायणसिंहमहाभागैः कृतेन प्रोत्साहनेन एतावद्दूरम् अहमागत इति तेषामुपकृतिं स्मरामि।

श्रीगुरुचरणव्याख्यानस्य सङ्कलितस्य शुद्धिः स्व० गुरुचरणैर्हरिरामशास्त्रिभिः शुक्लमहाभागैः सम्पादिता। तथैवाग्रे तैर्विधास्यत इत्याशायां स्थितस्तेषां वियोगेन खिन्नमनास्तेषां चरणौ स्मरन् तदुक्तिं शरणं मन्यमान आसम्।

एतत्सामग्रीसम्पादने साहाय्यं साङ्गवेदविद्यालयाध्यक्षैः श्रीरामचन्द्रशास्त्रि-होसमनेमहाभागैः पुस्तकं प्रदाय कृतम्, तथा गुरुपुत्राभ्यां श्रीविश्वेश्वरशास्त्रि-गणेश्वरशास्त्रिभ्यां पितृचरणानां कृतिः प्रकाश्यतां प्राप्नोतीति श्रुत्वा महता हर्षेण सर्वविधमपि साहाय्यं प्रादायीति तेषां समेषां उपकृतिं सर्वान् सभाजयामि।

मूलपाठं विभज्य तत्र तत्र शीर्षकं तदेव स्थापितं यद् एन्० एस्० वेङ्कटा-चार्यैर्विद्वद्भिः संयोजितमिति तानपि स्मरामि एतत्प्रसङ्गे। श्रीटोणपेगोपालाचार्यैस्तु प्रकाशनाय पुस्तकमेवार्थशास्त्रस्य समर्पितम्। इयं तेषामुपकृतिरपि स्मरणीया वर्तते। सम्पादन-प्रकाशनकार्यं च श्रीलक्ष्मीकान्तशास्त्रिखनङ्ग–श्रीजगन्नाथशास्त्रि-तैलङ्गाभ्यां महान् परिश्रमः कृतो वर्तते। तदधमर्णतां भजमानस्तयोरुपकृतिं स्मरामि।

अस्य प्रकाशने प्रमादाद् अज्ञानाद् मुद्रकदोषाद् असौष्ठवाद् असामर्थ्याच्च अशुद्धयो जाताः प्रकाशनानन्तरमुपलब्धा वर्तन्ते। तदर्थं क्षमस्वेत्युक्तिं विनाऽन्य उपायो नास्ति। इयं प्रथमावृत्तिः, तत्र दोषा भविष्यन्त्येवेति ज्ञात्वा विद्वांसः पाठं शोधयित्वा अधीतिबोधाचरणप्रचारणैः समन्वेष्यन्तीमां कृतिमित्याशास्य विश्वेश-गुरुचरणौ नमन् विरमामीति।

विदुषां वशंवदः

**विश्वनाथशास्त्रिदातारः**

॥ श्रीगुरुः शरणम् ॥

# विषयप्रवेशः

श्रीमतां विदुषां पुरतः कौटिलीयमर्थशास्त्रं सटीकमुपस्थितं वर्तते। सम्प्रति यावत्यष्टीका उपलभ्यन्ते, ताः समालोच्य अपरमपि व्याख्यानमपेक्षितमस्तीत्यनुभूतं गुरुवर्यैः पण्डितैराजश्रीराजेश्वरशास्त्रिचरणैः। तैरध्यापितं यत् तच्छ्रुत्वा यथामति विषयं समीक्ष्य टीकाद्वयं विलिखितं सम्पादितं प्रथमाधिकरणे चतुर्दशाध्यायान्तम्। तत्रत्योंऽशः संक्षिप्य प्रस्तूयते।

## टीका-प्रयोजनम्

प्राचीनराजशास्त्रनाम्ना व्यवहृते अर्थशास्त्रे आधुनिकैः पूर्वमनुद्भाविताः शङ्का उत्थाप्यन्ते। तासां समाधानायेदं टीकान्तरं न व्यर्थतां भजते, न वा पुनरुक्तिम्, तथैवोक्तत्वात्।

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
आक्षेपस्य समाधानं शास्त्रेऽधिकरणं स्मृतम्॥ इति।

## अर्थशास्त्रम्

अस्मिन् शास्त्रे प्रतिपाद्यो विषयः अर्थः, स च मनुष्यवती भूमिः, तन्त्रयुक्तौ कौटिल्येन तथाभिहितत्वात्। "मनुष्याणां वृत्तिरर्थः मनुष्यवती भूमिरित्यर्थः" इति। (अ० १५ अ० १) तस्या अर्जनं रक्षणं वर्धनं सत्पात्रप्रतिपत्तिश्च कर्तव्या भवति। "अर्थमूलौ हि धर्मकामौ", "धर्मादर्थोऽर्थतः कामः" इत्युक्त्या केचन त्रिवर्गमपि अर्थ्यत्वेनार्थेऽन्तर्भावयन्ति। तस्यार्थस्य विधायकं शासनं यत्र तदर्थशास्त्रमिति।

मनुष्यवत्या भूमेरर्जनेन राज्ञः स्वत्वं करग्रहणोपयोग्येव मन्तव्यम्, मीमांसकैस्तथैव साधितत्वात्। स्वत्वञ्च शास्त्रसमधिगम्यमिति हेतुना शास्त्रमर्थार्जनाय अपेक्ष्यते। अत एव पृथिव्या लाभे पालने चेति आदिमे सूत्रे टीकाकृद्भिः निमित्तार्थकत्वं प्रतिपाद्यते। "करः उचितादेयः" इति करव्याख्यायामौचित्यपदार्थस्य सन्निवेशोऽपि उक्तमर्थं पुष्णाति।

किञ्च, राजनीतौ न्यायधर्मौ "मन्वाद्युपदिष्टः परिपालनोपायो न्यायः", "मन्वाद्युपदिष्टं पालनं धर्मः" इत्येवंरीत्या जयमङ्गलाकृता कामन्दकीयव्याख्यायां विवेचितौ, तावुभावपि शास्त्रस्यानुयायित्वे स्वीकृत एव सम्भवतः, मीमांसकैरपि शास्त्रस्य लोकतः पूर्वं प्रवृत्तेः स्वीकारात् सप्तम्या निमित्तार्थकत्वं सिद्धम्।

## राज्यम्, राजा च

मनुष्यवत्या भूमेरर्जने करग्रहणोपयोगि स्वत्वं यस्य स राजा, तेनानुष्ठीयमानं कर्म राज्यम्, अथवा स्वतादात्म्यलाभपालनोपायभूतसत्त्वबुद्ध्युभयाश्रयस्वान्यतरसम्बन्धावच्छिन्नस्ववृत्तितासम्बन्धेन स्वविशिष्टत्वम्, तच्च राजवृत्तित्वाद् राज्यम्। उक्तान्यतरसम्बन्धेन राजवृत्तयः सप्तप्रकृतयोऽपि सम्भवन्तीति लक्षणसमन्वयः। तदाहुः—"राज्यं राजत्वं राजेत्यभिधानप्रत्यययोः प्रवृत्तिनिमित्तम्, तच्च स्वस्वामिसम्पदुपेतं प्रकृतिसप्तकमेव भवितुमर्हति" इति। क्वचिद् राज्यपदव्यवहृतिः अमात्यादिषडादिप्रकृतिष्वपि वर्तते। तदाहुः—'अमात्याः प्रकृतयो मित्रान्ता राज्यमुच्यते' इति। सा औपचारिकी विज्ञेया, उक्तव्याख्याने प्रवृत्तिनिमित्तपदोपादानात्।

## राजनीतिः, दण्डनीतिः

स्वामिसम्पदुपेतः आत्मसंस्कारसम्पन्नो राजा भवति। स च सति सम्भवे आत्मसम्पन्नः क्षत्रियः, तदभावे आत्मगुणसम्पन्नो योऽपारे पारः, अप्लवे प्लवः, स इतरोऽपि भवति। तथाविधं राजानमधिकृत्य प्रोक्तमिष्टसाधनताकं कर्म राजनीतिः। मात्स्यन्यायाद् अव्यवस्थायाश्च प्रजायाः संरक्षणाय उपायविकल्पे कृतक्षणः राजा दण्डत्वेनोपचर्यते, तद्धरत्वात्। तस्य प्रवर्तनाद्दण्डनीतिः अर्थशास्त्रपरपर्याया।

अपि च दण्डशब्देन सामदानभेददण्डाः गृह्यन्ते, तेषां समेषामपि दमनोपायत्वात्। उपायचतुष्टयात्मकदण्डप्रवर्तनज्ञापकं शासनं दण्डनीतिः, तद्बोधकत्वात् शास्त्रमपि तन्नाम्ना व्यवह्रियते।

## दण्डनीतेरधिकारी

अर्थशास्त्रे वर्णितं कर्म क्षात्रो धर्मः, स च सत्त्वाद्यष्टगुणसम्पत्तिः। प्राधान्येन तत्र अधिकृतः सर्वोऽपि वर्ग इति सर्वोऽपि जनो दण्डनीतेरधिकारी। यावत्पर्यन्तं क्षत्रियो वा तदितरो वा शासनं कुर्वन् क्षात्रं धर्ममनुतिष्ठति, तावत्पर्यन्तं नीतिमचिन्तयन्त्यपि प्रजा वर्णाश्रमधर्मं स्वं स्वमनुतिष्ठन्ती कृतकृत्यतां भजत इति सत्यम्, तथापि यदा शासकः प्रमाद्यति, तदा तु प्रजयाऽपि नीतिरनुष्ठेया भवति, मनुना तथैव व्यवस्थापितत्वात्[1], वीरमित्रोदये तथा निर्णीतत्त्वाच्च।

## दण्डनीतेर्योगक्षेमसाधनत्वम्

जनपदस्य संरक्षणोद्देश्येन लोकयात्रायाः सुचारुत्वाय आन्वीक्षिकी त्रयी वार्ताः साक्षादुपयुज्यन्ते; किन्तु दण्डनीतेरभावे तासां सतीत्वमसत्प्रायमेव भवति, अस्या रक्षकत्वात्, "दण्डमूलास्तिस्रो विद्याः" इत्युक्तत्वाच्च। शासकः शासनपदेऽधिष्ठितो

---

१. ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः।

यदा सम्यक्तया नीतिं प्रवर्तयति लोके, तदैव विद्याविदः शेषा विद्याः समुपासते। 'योगक्षेमनिष्पत्तिर्नयः, विपत्तिरपनयः' इत्येवंरीत्यैव जयमङ्गलाकृता नयशब्द-व्याख्यानात्।

### दण्डनीतेः प्राधान्यम्, अन्यासां विद्यानामङ्गत्वम्

रक्षणकर्तृत्वाद् दण्डनीतेः प्राधान्यात् तदनुष्ठाता राजाऽपि प्रधानः सेव्यो भवति, 'वर्धनाद्रक्षणं श्रेयः' इत्यभिधानात्।

### राजशास्त्रस्य प्रवृत्तिः

इदं राजशास्त्रं रक्षणार्थं तदा प्रवृत्तम्, यदा वेदोदित आदर्शोऽदर्शनप्रायतां प्राप्नोत्। स चादर्शः श्रुत्या उन्नीतः—

"न मे स्तेनो जनपदे न कदर्यो न मद्यपः।
नानाहिताग्निर्नायज्वा न स्वैरी स्वैरिणी कुतः॥" इति॥

यदा जनपदे निरभिमानितादिपुरस्सरं जनस्य तद्विधत्वं सर्ववादिसम्प्रतिपन्नं भवति, तदा तन्महिम्ना कदर्यः स्वैरी मद्यपः स्तेनः पातकी अनग्निर्न भवति। तथाविधः समय इतिहासेनाप्युपदिश्यते—'नैव राज्यं न राजासीत्' इत्यादि। अस्य वचनस्य नेदं तात्पर्यं यद् नीतिरेव नासीदिति; किन्तु ऽपराधप्रमादाद्यभावात्तद-पसारणार्थं दण्डप्रणयनं नासीदिति। अत एव प्रकृतिसप्तकसमुदायाभावान्न राज्य-पदप्रवृत्तिः, न वा स्वस्वसम्पदभावे अपनयबहुले राज्ये वा सा प्रवृत्तिः। ततो दीर्घेण कालेन भोगसमृद्ध्या आलस्यभाव उदेति, तदानोमनभ्यासादिवशाच्छास्त्रं विषायमानं भवत् प्रज्ञाश्रुतमतिषु भ्रममुत्पादयति, मोहं चासादयति। एवं क्रमेण अविद्या वर्धमाना अनाचारे साङ्कर्ये अकर्मणि जिह्वास्वादे रुचिमुत्पादयति। कलहं भेदञ्च वर्धयति, स्वार्थोन्मूलितसौहृदमपसारयति। तत्परिणामे मात्स्यन्यायो वर्धते[1]। एवं स्थिते विद्यानां विलोपात् कामोद्भवाद् दुःखपङ्के पङ्के गौरिव भूनिमज्जति, ततो जनपदे विषाद-जडताऽप्रतिभा-पारतन्त्र्याणि दुर्निवाराणोति तदपसारणाय योगक्षेमो-द्देश्येन दण्डनीतिः तिष्ठते। अनया लोकः कुपथान्निवर्त्यते। तदा निर्बाधतया—

योगाय वार्ता लोकस्य नीतिः क्षेमाय चोदिता।
त्रयी तत्रापि मघवन् लोकपक्तिप्रयोजना॥

इत्युक्तरीत्या अपराविद्याः प्रतिष्ठन्ते, अभिवर्धयन्ति च जनपदम्। इति दण्डनीतेः विद्यान्तरस्य योगक्षेमसाधनत्वम्।

---

१. 'इदं प्रकृत्या विषयैर्वशीकृतम्', 'कृतविद्योऽपि बलिना', 'इयं हि लोक-' इत्यादि पद्यानि नीतिसारे द्रष्टव्यानि।

## दण्डनीतेः शाश्वतीत्वम्

प्रमाणपुरस्सरं परीक्ष्य देशकालौ शक्तिञ्च विविच्य जायमाना प्रवृत्तिर्विघ्नैरनुच्छेद्यैवेति युक्त्या प्रतिपादयितुं शक्यते, अन्यथा अव्यवस्थाप्रयुक्तं निमज्जनमेवापद्येत।

## अर्थशास्त्र-प्रकृतिः

महान्तमत्यर्थे क्षत्रियं गृहस्थं सर्वातिशायिनं समृद्धिमन्तं राजानमनुध्याय अर्थशास्त्रं दण्डनीत्यात्मकमुपदिष्टम्, अत्र तेन निरूपितोऽर्जनवर्धनरक्षणसत्पात्रप्रतिपत्त्यात्मकचतुष्टयं प्रति सर्वाङ्गोपसंहारो वर्तते। इत एव सर्वविधैः शासनैः गृहस्थैर्वा समानधर्मं सुचिन्त्य अतिदेशेन अङ्गपूर्तिः सुविचारणीयेति सर्वविधस्यापि शासनस्य कृते महदुपकारकं प्रकृतिभूतं स्थितम्।

## सङ्घादिषु सर्वाङ्गोपसंहारे परिश्रमः

ननु सङ्घादिकमधिकृत्यार्थशास्त्रेण सर्वाङ्गोपसंहारः कुतो न प्रदर्शितः? इति चेत्, परिश्रमात् काठिन्यात् सर्वाङ्गोपसंहारासम्भवाच्च न कृत इत्युच्यते। तथा हि—

कामन्दकेन प्रकृतिव्यसनेषु गौरवं लाघवञ्च चिन्तयता स्वामिनः सर्वापेक्षया प्राधान्यं स्वीकृतं वर्तते। मित्रव्यसनापेक्षया दण्डव्यसनं गरीयः, तेन मित्रामित्राणां साधनात्। ततोऽपि कोशव्यसनं कोशेन क्षीणस्य बलस्य पूरणे शक्तत्वात्, ततोऽपि दुर्गव्यसनं तत्र कोशदण्डयोः संश्रयात्, ततोऽपि जनपदव्यसनं तन्मूलत्वाद्दुर्गकोशदण्डमित्राणाम्, तस्मादप्यमात्यव्यसनं जनपदे सर्वारम्भाणाममात्यपूर्वकत्वात्सर्वकर्मसिद्धीनां तद्व्यसनप्रतीकारस्य च, ततोऽपि स्वामिव्यसनं स्वामिना शेषप्रकृतीनामसम्पन्नानां सम्पादनात्, सम्पन्नानां चाभिवर्धनात्। यदि स्वामी राज्यस्य न स्यात्, तर्हि तत्कर्तृककर्मणामविधानेन सर्वाङ्गोपसंहारो न सम्भवेत्।

किञ्च, एकः कुलीनः क्षत्रियो राजपुत्ररक्षणप्रकरणोक्तदिशा महता परिश्रमेण गर्भाधानादारभ्य हितद्रष्ट्रा गुरुणा चतस्रो विद्याः शिक्षयित्वा राजपुत्रः बोधनीयो वर्तते। बोधे जात एव राजपुत्रः कामजक्रोधजाभ्यां व्यसनाभ्यां निर्मुक्तः, स्वकर्मणि कुशलः, आश्रितात्मोपकारिगुणसम्पन्नः संस्कृतो भूत्वा जनपदस्य मित्रं कथञ्चिद् भवति। एवंविध एव मन्त्रिणामव्यसनिनां सम्पादनं कर्तुं प्रभवेत्। सङ्घे स्थितेषु समेषु तथाविधां योग्यतामाधातुं राजपुत्रनिमित्तकश्रमापेक्षया श्रमबाहुल्यं कुलीनत्वाभावनिमित्तके संस्काराभावे च विपरीतभावं विलोपयितुं वा अक्षमत्वाच्च अर्थशास्त्रस्य दृष्ट्या सर्वाङ्गोपसंहारः सङ्घमधिकृत्य आञ्जस्येनासम्भवीति लाघवमनुसृत्य राजानमधिकृत्य अर्थशास्त्रस्य सर्वाङ्गोपसंहारः प्रदर्शितः।

## दण्डनीतेः सृष्टिकालावस्तित्त्वम्

प्रमादादकार्यप्रवृत्तौ सत्यां ततः रक्षणाय क्रमशः दण्डनीतिः विकासभावमापन्ना सती विराजत इति नास्ति प्राच्यभारतीयसिद्धान्तः; किन्तु सर्वाणि शास्त्राणि सर्वज्ञस्य ईश्वरस्य विद्यावतः वेदप्रभोः मुखात् पूर्वत एवानुवृत्तानि प्रकाशं प्राप्तानि इत्येव सिद्धान्तो जागर्ति, सम्पूर्णाया दण्डनीतेः असर्वज्ञस्य कृते दुर्ज्ञेयत्वात्। यच्च नेति कौटिल्य इत्युक्तम्, तत्र तु पूर्वानुस्यूतसमन्वयेन उद्देश्यसाधनाय अपेक्षानुसारेण त्रयीमाश्रित्य तदीयमर्यादानुसारेण न्यायाभासविचारणेन च साधितम्। प्रपञ्चयिष्यते चैतत् पुरस्तात्।

## सर्वाणि शास्त्राणि दण्डनीतिः

यदि प्रजापालनार्थं शास्त्राणि नीत्यात्मकतया प्रवृत्तानि स्युः, तर्हि सर्वाणि तानि नीतिपदभाञ्जि भवन्ति। यदा तु धर्मादिभेदेन उद्देश्यं पृथक्कृत्य शास्त्राणि धर्माधिकारिकादिभेदेन प्रवृत्तानि भवन्ति, तदा तान्येव शास्त्राणि दण्डनीतितः पृथक् परिगण्यन्ते। एवं सत्त्वे अङ्गाङ्गिभावाभावेन शास्त्राणि उत्सन्नकल्पानि भवन्ति। अतः शास्त्राणां पार्थक्येन अस्तित्त्वे कल्पितेऽपि अङ्गाङ्गिभावेन परस्परं संरक्षणपराणि भवन्ति। तथासति अवयवानामवयविभावेन प्रवृत्तानामेकात्मकतयेव सर्वाणि शास्त्राणि दण्डनीतावन्तर्भवन्ति।

## अर्थशास्त्रपरिमाणम्

तदिदमर्थशास्त्रं लक्षाध्यायात्मकमादौ ससर्ज भगवान् प्रजापतिः। अत्रैव धर्मार्थकामसम्प्रतिपत्तिः उपवर्णिता वर्तते। तं ग्रन्थं भगवान् शिवावतारो विशालाक्षोऽधीतवान्। ततः संक्षिप्य स्वीयं ग्रन्थं विशालाक्षः दशसहस्राध्यायात्मकमिन्द्रमध्यापयामास। सोऽपि सञ्चिक्षेप पञ्चसहस्राध्यायम्। तं बृहस्पतिः जग्राह। सोऽपि त्रिसहस्रं ग्रन्थं निर्माय शुक्राय ददौ। काव्यः अध्यायानां सहस्रेण ग्रन्थं निर्ममे। औशनसं मतं भारते विस्तरेण वर्ण्यते। तथात्वेन महाराष्ट्रराज्यशासनपर्यन्तमौशनसं मतमाचारतया स्वीकृतं बभूवेति शुक्रनीत्यनुमोदितानां महाराष्ट्रराज्ये स्थितानां मन्त्रिणां गणनया स्फुटीभवति। उपर्युक्तपरम्परातिरिक्ताद्यर्थशास्त्रविदां परम्परा बभूवेति ग्रन्थान्तराज्ज्ञायते। अपि च आभीयविदुरोद्धवभीष्मादिमतत्वेनापि तत्र तत्र सङ्ग्रहो दृश्यते। एवंरीत्या अर्थशास्त्रस्य मूलग्रन्थस्य महान् विस्तारो भवति। तानि सर्वाण्यर्थशास्त्राणि पर्यालोच्य अमन्दमतिर्विद्यापारदृश्वा आचार्यः कौटिल्यः सूत्रं भाष्यञ्च संक्षिप्य षट्श्लोकसहस्रं साशीतिप्रकरणशतपरिमितं ग्रन्थं निर्बबन्ध अमात्यश्रियं च साधितवान्। नीतिं निरूपयन्नपि ग्रन्थकर्ता भूमेरर्जनमभिदधाविति स्वग्रन्थमर्थशास्त्रत्वेन जुघोष। एतत्प्रणीतस्य शास्त्रस्याध्ययनेन नीतिशास्त्रं विशालाक्षादारभ्य इतरैः अनेकैः सङ्क्षिप्य प्रणीतं सम्पूर्णं परिचितं भवति। तेन नीतेर्न्यूनता ग्रन्थान्तराणां विलोपेऽपि न मन्तव्या।

## अर्थशास्त्रसंविधानमादिमसमाजस्य

सृष्टिकालादारभ्य आदिमो भारतीयः समाजः वर्णाश्रमप्रधानः, तमनुरुध्यैव शास्त्रस्य प्रवर्तनम्, "भुवनं चतुर्वर्णाश्रमो लोकः" इति व्याख्यानात्, "जनः चतुर्वर्णाश्रम-जातिलक्षणः, पदं तस्य स्थानम्" इति जनपदव्याख्यानाच्च। अत एव "धर्मार्थयोः कर्मणोः प्रवर्तनार्थं त्रयीवार्ते प्रवृत्तानां निष्पन्नानाञ्च रक्षणाय दण्डनीतिः" इति विद्याविभागे जयमङ्गलोक्तं सुष्ठु भवति। भारतवर्षस्य प्रकृतिः चतुर्वर्णाश्रमधर्मः, तत्र यदा अव्यवस्था समुदेति, तदा व्यवस्थां विधातुं राजा यत्र चेष्टते, तदर्थमेव तस्योपयोगात्। तदुक्तं जयमङ्गलायाम्—"तौ भागत्वेनापरिकल्पितावपि व्यवस्थार्थ-मुत्सृष्टकौ" इति। राज्ञा कर्तव्या च व्यवस्था नैच्छिकी सम्भवितुमर्हति, तस्य राग-द्वेषात्मदोषवत्वात्। अतो विनिगमनायां कर्तव्यायां न्यायान्यायमन्त्रणायां रागद्वेष-शून्यमीशितुर्मतं विनिगमकत्वेन भारतीयेनानेन समाजेन स्वीकृतम्। अतो वर्णाश्रम-व्यवस्थाया सुचारुत्वसम्पत्तये त्रयीप्रामाण्यमुररीकृत्य प्रवृत्तमर्थशास्त्रं वर्णाश्रमिणां कृत एव सम्भवति, प्रत्येकदेशवासिभिः तत्तद्देशमनुरुध्य संविधानस्य पार्थक्येन कृतस्य संविधानस्य प्रदर्शनात्। ततोऽन्यत्र अतिदेशविधया अस्य शास्त्रस्य प्रवृत्तिः। एवं कल्पने शास्त्रकर्तॄणां मनोवृत्तेः सङ्कोचो न मन्तव्यः।

## अर्थशास्त्रटीकाः

अस्यार्थशास्त्रस्य नैकापि टीका श्रीमूलां विहाय पूर्णा वर्तते, तथापि वैदिका-वैदिकैः नीतिं चिन्तयद्भिः अर्थशास्त्रं समादृतं वर्णाश्रमसमाजसंस्थापने महान् आदरश्च सर्मपित इत्यस्य सर्वपारिषद्यं निर्विवादमेव। यथा जयमङ्गलाकर्ता शङ्करार्यो वदिकः, योग्घमभिक्षुप्रभमती अवैदिकौ। एतासु टीकासु जयमङ्गला आदिमाधिकरणमेव प्रकाशयति। अत्रेदमवधेयम्—

एन्० एस्० वेङ्कटाचार्य-( 'रिसर्च असिस्टेण्ट, मैसूर विश्वविद्यालय )विद्वद्भिः अध्यक्षप्रचारादौ स्थलविशेष उक्तत्वादियं टीका अन्यान्यप्यधिकरणानि प्रकाशयन्ती विदुषां समवधाने चकास्ति इति। नीतिनिर्णीतिर्योग्घमकृता जैनसम्प्रदायानुयायिनी प्रथमाधिकरणस्य पदानि व्याख्याति। भिक्षुप्रभमतिकृता चाणक्यटीका द्वितीयाधिकरणं विवेचयति। प्रतिपदपञ्चिकापि श्रीभट्टस्वामिनिर्मिता विशदयति द्वितीयाधिकर-णान्तम्। नयचन्द्रिका माधवयज्वकृता नवमाध्यायतः बुद्धिवैभवं स्फोरयति। श्रीमूला तु पूर्णाऽस्माभिरुपलब्धा। तत्र वार्तिकभूतं कामन्दकीयं टीकाद्वयोपेतं समास्ते। इत्येवं-रीत्या अर्थशास्त्रं महद्राशिभूतमात्मगौरवेण गुरुभावं भजते।

## कौटिलीयमर्थशास्त्रं धर्मशास्त्रानतिरिक्तम्

नीतेर्वक्ष्यमाणलक्षणानुसारेण कौटिल्योक्तं सर्वविधानं शब्दप्रमाणप्रमितत्वाद धर्मशास्त्रान्तर्गतत्वाद् धर्म्यमेव। "येषां मते संवरणमात्रा त्रयी, तन्मते अर्थशास्त्राद

धर्मशास्त्रं बलीयः" इति व्यवहारप्रकाशोक्तिविरोधोऽत्र न मन्तव्यः। धर्मशास्त्रेण धर्मस्य प्राधान्यं मन्यते, धर्मप्रतिपादकेनार्थशास्त्रेण तु अर्थस्य प्राधान्यं स्वीक्रियते। अत इदमर्थशास्त्रं धर्मशास्त्रं सदपि प्रत्यक्षानुमानवेद्यत्वमप्यर्थसाधनेषु स्वीकरोति, तदपि दृष्टकार्यकारणभावविचारणात् शोभनमेव।

## नीतिस्वरूपम्

अर्थशास्त्रेण अर्थ्यत्वाद्योऽर्थश्चिन्तितः, स नीतिस्थ इति नीतिस्वरूपं विविच्यते। प्रत्यक्षानुमानागमप्रमाणप्रमितं यद् इष्टसाधनं कर्म देशकालशक्त्यनुकूलम् तदेव नीतिपदेन व्यपदिश्यते। एतेन लक्षणेन नीतिशास्त्रं तन्निरूपिता नीतिश्च सर्वेषां कृतेऽविरुद्धा सती मित्रभावं भजत इति सर्वदा अस्यां समादरो येन केनापि शासनेन कर्तव्य एव इत्यर्थात् सिद्धम्। आगमवादिनो वैदिकास्तदेव कर्म स्पृहयन्ति, यत्र शब्दः स्वप्रभया प्रमितत्वं बोधयति, तथैव प्रत्यक्षानुमानवादिनश्चार्वाकादयोऽपि स्वस्वमतेन परिगृहीतेन प्रमाणेन प्रमितं स्यात्। तदेतन्मतमेनं नीतिलक्षणं समलङ्करोतीति तेऽपि नीतिमनुरुन्धन्ति, कौटिलीयनीतिनिर्णीतौ अनुष्ठात एकमत्यसम्भवोऽपि आञ्जस्येन प्रकाशित इति भारतीयनीतौ भेदस्यावसरो नास्ति।

केचन नीतेर्धर्मत्वं परिचक्षते, तस्याः सर्वैरनुष्ठीयमानत्वात्, तन्न, कौटल्येन वैदिकस्येव विशेषधर्मस्यापि नीत्यन्तर्गततया सङ्गृहीतत्वात्। तथा चानुष्ठीयमानं कर्म स्वरूपतः प्रत्यक्षवेद्यमपि तन्निष्ठं साधनत्वं शब्दप्रमाणेन प्रमितं सत् प्रत्यक्षानुमानावेद्यत्वात्तदभावप्रयुक्तमप्रमितत्वं व्यावर्तयतीति नीतेरपि धर्मत्वेन इतरव्यावृत्तिसम्भवात् धर्मत्वाव्यवहाराच्च धर्मलक्षणस्य समन्वये न कोऽपि दोषः पदमादधाति।

## नीतिस्वरूपे आगमोपयोगः

अपि च प्रत्यक्षानुमानाभ्यां निर्णीतेऽपि इष्टसाधनत्वे कालान्तरे साधनत्वेनाभिमतं तत्तथैव कालान्तरे दुरपनेयदोषावहं न वेति सन्देहनिरासः अल्पज्ञेन कर्तुं न शक्यः। (पृ० २८) न वा प्रत्यक्षतो निर्णीतस्यार्थस्य निर्दुष्टत्वं प्रति असर्वज्ञः प्रतिभूर्भवितुमर्हति। मोहजालपरिवृत्तेषु साध्यसाधनेषु प्रमाणाभासशङ्कितत्वं न केनापि वारयितुं शक्यते। यतः प्रमाणसमीक्षायामधिकृतेन न्यायेन साधनत्वनिर्णयः अनन्यथासिद्धत्वाधीन उक्तः, अनन्यथासिद्धत्वञ्च प्रामाणिकव्यवहाराधीनमिति। इष्टसाधनत्वेनाभिमतेऽर्थसाधनत्वनिर्णयेऽसन्देहाय आगमः प्रमाणतया नीतिलक्षणे निवेशितः।

## प्रत्यक्षानुमानोपयोगो नीतिलक्षणे

शब्दप्रमाणप्रमितत्वेऽपि तदाश्रये अलौकिकत्वं भावयेत्, तर्हि कृतिसाध्यत्वमिष्टसाधने शब्दप्रमितेऽर्थे बाधितं स्यात्, तन्निरासाय लौकिकत्वं साध्यते प्रत्यक्षानुमानाभ्याम्। दृष्टं चैतद् नटैरभिनीयमाने चरित्रे असम्भावनाविपरीतभावनाप्रयुक्तं वैरस्यं निरसितुं लौकिकत्वं व्यवस्थाप्यते साहित्यविद्भिः, तथैव नीतावभिनीयमाने चरित्रे नीतिविद्भिः साध्यते।

### शक्तिः

नीतिस्वरूपविवेचनप्रसङ्गात् शक्तितत्त्वं विविच्यते—

ज्ञानप्रभा च सानन्दा तस्याः सत्त्वं प्रजायते ।
क्रियाप्रभारजःशक्तिः स्यादुत्तमा प्रसूः ॥ ( अधि० २ )

इति भावप्रकाशनोक्तदिशा ईशसमवेतज्ञानानन्दक्रियाणां प्रभास्वरूपाणां मिश्रणं जीवसमवेतं यदा भवति, तदा तच्छक्तिपदेन व्यवह्रियते । अत्र प्रभापदोपादानाद् ज्ञानानन्दक्रियाणां तेजोरूपत्वं साहित्यमतेन सिद्धं भवति । नयचन्द्रिकाकारेण "कोशदण्डादिमत्त्वम्" इति मतुप्प्रत्ययघटितमुक्तत्वात् । "कोशदण्डजं तेजः" इति जयमङ्गलायामुक्तत्वाच्च शक्तेस्तेजस्त्वं सम्प्रतिपन्नम् । घटत्वपटत्वादौ त्वतल्प्रत्ययाभ्यां बोध्यमाना शक्तिः पूर्वोक्ता तेजसोऽभिन्नैव ।

"मनसि सुसमाधिनि विस्फुरणमनेकधाभिधेयस्येति" काव्यप्रकाशविवरणे गोकुलनाथोपाध्यायैर्व्याख्यातत्वाद् मनसि पदार्थस्फुरणमपि संस्कारजं भवति । व्युत्पत्तिशक्तिभेदेन संस्कारो द्विविधो भवति । तत्र सामान्यधर्मभावेन ( स्रग्धरावृत्तत्वावच्छेदेनादौ गुरुचतुष्कत्वं ) संस्कारदाढर्यं व्युत्पत्तिः । तत्तदानुपूर्वीकपदगोचरः संस्कारो विशेषभावेनोद्बुद्धः शक्तिः । सोऽयं शक्त्याख्यस्तेजोरूपतयोपवर्णितः संस्कारविशेषः शास्त्राभ्यासानन्तरं तृतीयां व्युत्पत्तिकक्षामतीत्य विद्वद्भिः लभ्यो भवतीति वसिष्ठस्मृतिटीकायां मङ्गलाचरणेन ध्वन्यते—

आदौ शास्त्रान्धकारे पतित इव ततोऽभ्यासमार्गे चरिष्णुः
पश्चाद्व्युत्पत्तिदेहल्युपग इव ततः शक्तिवाटीप्रविष्टः ।
नानाशब्दाख्यपुष्पावचयकरणतो वाग्वशीभूतविश्वः
यत्प्रेमापाङ्गदृष्टया भवति कविवरो भारती सा पुनातु ॥ इति ।

इदं शक्तितत्त्वं जगन्मूलभूतप्रकृतिगतं स्वतन्त्रचेतननिष्ठम् । तथा च यस्य पुरुषस्य ज्ञानाधिक्यं क्रियाधिक्यमुक्तसंस्कारोद्बोधेन सदोदितं भवति, तथा साहित्यमर्यादया आनन्दप्रभा यदि अभिव्यक्ता, तर्हि सा शक्तिघटकभूता क्रियाप्रभा ईशसमवेता अर्थशक्तिः शास्त्रेण प्रकाश्यते ।

### अर्थशास्त्रविभागः

तदर्थशास्त्रं तन्त्रावापभेदेन द्विधा विभक्तं वर्तते । आद्ये भागे स्वमण्डले तन्त्र एकतासंरक्षणञ्च काम्यते । द्वितीये भागे आवापे परराज्यात्मसात्करणं साधनीयं भवति । तत्र तन्त्रे विनयाधिकारिकाध्यक्षप्रचार-धर्मस्थीय-कण्टकशोधन-योगवृत्तानि पञ्चाधिकरणानि निरूपितानि भवन्ति । आवापे मण्डलयोनि-षाड्गुण्य-व्यसनाधिकारिकाभियास्यत्कर्म-साङ्ग्रामिक-सङ्घवृत्ताबलीयस-लब्धप्रशमनानि अष्टौ अधिकरणानि । तत औपनिषदिकं तन्त्रयुक्तिश्च निरूपिते ।

## राजत्वं विजिगीषुत्वञ्च

तन्त्रे स्वमण्डलचिन्तायां कर्तव्यायां प्रकृतिरञ्जनं कर्तव्यं भवतीति 'राजा' अधिकारी उक्तः। अत्र आत्मगुणसम्पत्तौ आधातव्यायां क्रोधलोभादिवर्जनमुक्तम्। परराज्यात्मसात्करणे तु क्रोधादिभावानामभ्युदयसापेक्षत्वाद् राजैव उत्साहगुणवान् विजिगीषुर्भूत्वा अधिकारी भवति।

## राज्यस्य मूलं धृतिः (सत्त्वम्)

तन्त्रे राज्यस्य संरक्षणाय वर्धनाय च ग्रन्थकृता कौटिल्येन, कामन्दकेन वार्तिककृता च सत्त्वमभिहितं वर्तते। तस्येयमुपपत्तिः मूलतया राजगुणैराकृष्टा रत्यादिरसतत्त्वेष्वन्यतमेनाद्भुतेन समृद्धा। प्रजा राजानं मनसा ध्यायति यदि, तर्हि सा साधुवादेन मनस आकर्षणेन एकाग्रतया ध्यानेन राजानमनुगच्छति, नापि च विरज्यतीति समालोच्य शासकेन प्रजासु अद्भुतरसः सञ्चारणीयो भवतीति साहित्यमर्यादामाधारीकृत्य सञ्जनितं तामेव साधयितुं नीतिरियं प्रवर्तते। तत्साफल्याय अद्भुतविभावेषु विद्वदादिसाधारण्येन अभीष्टादेरचिन्तनं सर्वायत्तम्। तदेव नीत्या सत्त्वव्यपदेशेन विहितम्। यावत्पर्यन्तं तर्कसहितं ज्ञानं नोदेति, तावद् व्याप्तिपक्षधर्मतानिश्चयाभावाद् रागत आत्मा न रक्ष्यः सम्भवति। तथा सति अभीष्टादेरचिन्तनं शासको न स्वायत्तीकुर्यादिति प्रत्यभिज्ञादर्शने तत्र तत्र दर्शनेषु ज्ञानं सत्त्वादभिन्नमित्युमुपन्यस्तम्, तत्सदर्थेषु निर्बाधत्वम्। तच्च आधुनिकाक्लृप्तान्वयव्यतिरेकप्रसूतेषु बाधितमपि भवति, याथार्थ्यार्थाय ईशसमवेततज्ज्ञानविषयतया एष्टव्यम्। यदि च विद्वत्सु विद्यामधीत्यापि सुखानुभूतिः मनःप्रसादः विशङ्कता च नोपलब्धाः, तर्हि तज्ज्ञानं ईशसमवेतं सदपि सत्त्वपदव्यपदेश्यं न भवति, कार्याक्षमत्वात्। अतो ज्ञानात्मिकायां प्रभायाम् आनन्दप्रभाया अपि साहचर्यमपेक्षितमिति भावप्रकाशनकृता निरणायि। तथा सति ज्ञानप्रभानन्दप्रभोभयसम्पत्त्या विलसितः अभीष्टादेरचिन्तनं कुर्वन् प्रजायामद्भुतं सञ्चारयति। सति च तस्मिन् धृतिभावः समुदेति, द्वयोरपि समशीलत्वात्। धृतौ सत्यामुचितकारिता अनुभावः स्वयमेव चेतसि कर्तव्यगोचर एव समुदेति। इदं हि रसस्य जीवातुः, तदानीं मानमदयोः अभावोऽपि नियत इति। अनेनानुभावमहिम्ना राजा लोके मन्त्रिप्रभृतिप्रकृतिवर्गं रञ्जयति, सङ्घट्टयति च इति राज्यस्य मूलं धृतिः।

धृतिसत्त्वयोरेकपर्यायत्वं स्वीक्रियते, एककार्यकरत्वात्। तत्स्वरूपं सङ्गीतरत्नाकरे विभावानुभावौ पार्थक्येन विभज्य विवेचितम्, तत्र धृतेर्विभावानुभावतया विवेकादय उक्ताः। तथा हि—

> विवेकः श्रुतिसम्पत्तिर्गुरुभक्तिस्तपस्विता।
> एता विषयभावेन करणत्वेन च श्रुताः॥ इति।

तथा च विवेकश्रुतिसम्पत्तिगुरुभक्तितपस्वितैतच्चतुष्टयाख्यं व्रतमुक्तम्। 'उक्त-चतुष्टयोद्देश्येन करिष्ये' इति सङ्कल्पे स्थितो नीतिकुशलो धृतिमान् भवति।

### प्रजानुरञ्जनकार्यक्रमः

धृतिमवलम्ब्य राज्ञा विनीतेन प्रथमतः मन्त्रिप्रकृतिः विनयभावं प्रापणीया भवति। ततः भृत्यादण्डप्रकृती विनीताः साधनीया भवन्ति, ततः पुत्रप्रकृती इमा आन्तर-प्रकृतीर्यदा विनयसम्पन्ना आन्तरीभवन्ति, तदा राजानं प्रति अङ्गभावं भजन्ते। एवंस्थिते ततो बाह्याः प्रजाः विनीय अनुरज्य संरक्ष्य च राजा अधिकां श्रियं प्राप्नोति।

### राजस्वामित्वेऽपि लोकसम्मतिः

अत्रेदमवधेयम्— धृतिभावमवलम्ब्य प्रवृत्तो राजा शास्त्रप्रसूतमीशसमवेतं ज्ञानं समुपलभ्य अनुरञ्जनकार्यक्रमेण यावत् प्रजाभिमतो भवति, तावदेव स शासन-पदमारोढुं प्रभवति। यदि सत्त्वमुपेक्षते, तर्हि रजस्तमोभिवृद्धा अज्ञता अभिमानिता कामबाहुल्यञ्च वर्धिष्णवो दृश्यन्ते। ततोऽसफलत्वाद् अवमाननात् प्रजा अपि राज्ञो विरज्यति। लोकसम्मतिश्च पराङ्मुखी भवतीति लोकसम्मतिशून्यत्वे स्वामी सन्नपि प्रजापीडनप्रयुक्तद्रोहानलदग्धो भवन् विनश्यति।

### लोकसम्मतिप्राप्तिवञ्चना

यद्यपि संवरणमात्रं हि त्रयीति जानन्तः केचिद् रसाभासमुत्पाद्य प्रजासम्मतिं प्राप्तुं वाञ्छन्ति, तथापि सा वाञ्छासिद्धिर्यावन्मदमानदम्भो वा न प्रकाशमेति तावदेव वर्तते, अज्ञानविजृम्भितस्य रागस्य भ्रान्तिमूलत्वेन भ्रमस्य बाधज्ञाननिव[illegible]-नार्थस्य बाधितत्वादविश्वासप्रकाशनाच्च।

### साधूनां प्रिया नीतिः

अर्थशास्त्रेणोक्ता सर्वापि नीतिः समन्वयपुरःसरं चर्चिता सर्वेषां योगक्षेमावहा शमस्थायिका असाधून् व्यसनिनो विहाय साधूनां मनोरञ्जिका वर्तते, अत्रैव यशस उपलब्धेः, आजीवनं विश्वासपूर्वकं सुवर्णसन्धिसम्पादनक्षमत्वाच्च, सद्वृत्तेर्धर्मस्य सत्त्वस्य साधुत्वस्य चैकरूपत्वेन सद्भिः साधुभिश्चानुष्ठानकाले समानतत्त्वसमाचरणात् शाश्वतत्वात्, मित्रार्जनकौशलाच्च।

### देवत्वं तस्य दृष्टोपकारकत्वञ्च

अत एव नीतिशास्त्रेण आत्मसम्पद्गुणसंस्कृतो राजा देव इत्यभिधीयते। तच्च कृतात्मभिः न कथमपि सोढुमशक्यम्, इति तत्सम्पादनाय नीतिमत्त्वमपेक्ष्यते। यदि आत्मनः कर्तृत्वमपहाय प्रयोज्यवृद्धत्वं स्मरन् तदादेशेन राजनीतिमादधाति, तर्हि स देवो भवति, देवत्वस्य भावप्रकाशने तथैव व्याख्यातत्वात्। एवञ्च विधिभागेन प्राप्ता

प्रेरणा ईशस्येति मत्वा तदीयप्रेरणया राजा यदा अनुतिष्ठति, तदा स देवो भवति। तत्रापि नीतिमर्यादायामनुष्ठितायां देवत्वेन सह माधुर्यसाफल्याभ्यां हर्षवत्वमपि स्वतः सिद्धमेव। इदमेव क्रियाप्रभायामानन्दप्रभामिश्रणम्।

### ओजसः प्राप्तिः

सात्त्विक्या नीत्या अवलम्बने देवभक्त्या च उपासकः सात्त्विको जितेन्द्रियः ओजस्वी भूत्वा आरोग्यं चिरकालिकमुपलभ्य दोषधातूनां साम्यात् कर्मणि समर्थो भवतीति नीतेर्न वैफल्यम्।

### कौटिल्यमतस्य शब्दप्रमाणप्रमितत्वम्

यदि नीतेः सात्त्विकत्वं वैदिकशब्दप्रमाणप्रमितेऽर्थे ईशसमवेतज्ञानविषय एव, तर्हि "नेति कौटिल्यः" इति ग्रन्थेन स्वमतं प्रतिपादयितुः कौटिल्यस्य महर्षित्वाद्वचने वेदप्रमितत्वं कथं भवेदिति चेदुच्यते।

"यदनूचानोऽभ्यूहति आर्षं तद् भवति" इत्युक्त्या श्रुतसम्पत्तिमान् तपस्वी विवेकी गुरुभक्तः यदभ्यूहति, तदार्षं शास्त्रीयमेव मन्यते मीमांसकैः। कौटिल्येनापि अनूचानेन कृते नीतिशास्त्रविधिनिर्णये य ऊहः कृतः, स मीमांसासम्मतः भवतीत्यत्रोपपत्तिरुच्यते। शास्त्रं द्विविधम्—अदृष्टार्थकम्, दृष्टार्थकञ्च। दृष्टार्थकस्य शास्त्रस्य रागप्राप्तार्थविधायकत्वाद् व्यर्थत्वं भाति। तदभावाय दृष्टार्थकशास्त्रीयो विधिः नियमविधौ परिसङ्ख्याविधौ वा पर्यवसितो भवति। नियमः परिसंख्या वा न शास्त्रेण कण्ठत उक्ता। अथापि मीमांसया प्राप्तयोः नियमपरिसङ्ख्ययोः शास्त्रीयत्वमेव। अथापि यत्र उद्देश्यस्य विलोप उद्दिष्टस्तत्साधनस्य सङ्घटनं वा असम्भवि, तत्र निषिद्धातिक्रमणं नियमातिक्रमणं वा कर्तव्यमेव भवति, तदानीं स एव धर्म इति अग्निहोत्रे कर्तव्ये तद्विलोपप्रसक्तौ निषिद्धस्यापि माषस्य हविष्ट्वेन सङ्ग्रहणं मीमांसकैर्न्यायतः साधितम्। नीतौ तु प्रायः सर्वेऽपि विधयो दृष्टार्थका एव। तानधिकृत्य प्राचीनाचार्यैः त्रयीप्रामाण्यमुररीकुर्वद्भिः दृष्टतत्त्वमधिकृत्य यो विधिरुक्तः, कौटिल्येन तस्यातिक्रमणमुद्देश्यस्य 'न मे स्तेनो जनपदे' इति श्रुतिप्रतिपादितस्यार्थस्य विलोपप्रसक्तौ कृतं वर्तते। क्वचित्समन्वयः कृतः, एतत्सर्वं प्रत्यक्षानुमानतो अन्वयव्यतिरेकसिद्धत्वात्, मीमांसाशास्त्रानुमतत्वाच्च वैदिकमेव मन्तव्यम्।

### कौटिल्यस्य धार्मिकता

कौटिल्यस्य भक्तिमत्त्वं श्रुत्वा तं कूटनीतिज्ञत्वेनाक्षिपन्ति। एतदज्ञान विजृम्भितम्, विद्याविभागप्रकरणे त्रयीस्थापनस्य प्राधान्येन विधानात्। एकैश्वर्ये योगवृत्ते तेन स्वमतं प्रतिपादितं यद् अस्वस्थे मृते वा राजनि मन्त्री राज्यकार्यं सञ्चालयन् एकामपि काकणिकां न गृह्णीयात्; किन्त्वैश्वर्यं संवर्ध्य तत् स्वामिने राजपुत्राय

समर्पयेदित्येव। अतः कौटिल्यो धर्मनिष्णातो धर्मविपरीतं विधातुं न प्रभवेत्। कूटनीति-प्रयोगास्तेनावाप उक्ताः। तत्कारणं तु लोककण्टकस्य अविनीतस्य रिपोः प्रबलस्य अभिन्नप्रकृतेः स्वानुकूलदेशकालस्य दमनद्वारा धर्मप्रतिष्ठापनम्।

## कौटिल्यः चाणक्यश्च

कौटिल्य इति चाणक्यस्य अभिधा कुटिलगोत्रोद्भवत्वादिति जयमङ्गलाकृता व्याख्यानात्, कुटिलाः कुम्भीधान्या इत्युपाध्यायनिरपेक्षायाश्चाख्यानोपलम्भाच्च। तस्यैव "चाणक्य" इति संज्ञा तु चणकदेशोद्भवत्वात् समस्ति, अस्य कुलशतप्रतिग्राह-काणामिति प्रवादात्। एतेनास्य वंशोऽतीव विस्तीर्णोऽभूत्। तत्र समुद्भूतो विष्णुगुप्त-नामायं चाणक्य इति जयमङ्गलाकृद्व्याख्यानात् स्फुटं भवति। कामसूत्रस्य रचयिता वात्स्यायन एतद्वंशोद्भवो विष्णुगुप्तसमकालिकः, अथवा श्रीधरस्वामिन उपाध्याय-निरपेक्षाकृतश्च व्याख्यानाद् विष्णुगुप्त एव वात्स्यायनो न्यायभाष्यकर्ता इत्युच्यते। यत्किमपि भवतु तद् भाष्यकर्ता, सूत्ररचयिता, अर्थशास्त्रनिर्माता च चाणक्यः कौटिल्य एव इति तु निश्चप्रचम्।

## विद्यास्थापना

नीतिशास्त्रं नीतिविचारावसरे प्रथमं कर्तव्यत्वेन देशे विद्याप्रचारकार्यमादिमं कर्म अनुमनुते, विद्याप्रतिबद्धत्वाल्लोकस्थितेः। यतः विद्यया मतिर्भवति, तया कार्य-निश्चयः। विक्रममात्रमवलम्ब्य सञ्जाता प्रवृत्तिस्तु विसंवादिनो भूत्वा निष्फला सती विषादं पारतन्त्र्यञ्च प्रापयेत्। किञ्च, विद्याभावे जडता उदियात्। सत्यां च तस्याम-प्रतिभापारतन्त्र्यञ्च नियतम्। ततः स्वातन्त्र्यस्य हानिः नीतेर्वैफल्यं च। तदुक्तम्—

'जाड्यमप्रतिपत्तिः स्यात् सर्वकार्येषु सर्वदा।
इष्टानिष्टान्न जानाति सुखदुःखे न वेत्ति च॥' (अधि० ४)

अतः नीतिशास्त्रेण प्रचारो विहितः।

## विद्याप्रचारे कामन्दकीयमतसमन्वयः

कामन्दकेनादौ जितेन्द्रियतानन्तरं विद्याविभागप्रकरणं प्रारब्धम्। तन्मतेन जितेन्द्रियतापदेन स्वाभाविको विनयः, ततो विद्याविभागः, स्वाभाविकं विनयं विना गुरुसान्निध्याभावेन विद्योदयानुपपत्तेः। कौटिल्येन तु कृतकविनयार्थमादौ विद्याविभाग उक्त इति नात्र विरोधः।

## विद्यापदार्थः

मूलकृता विद्यापदव्यपदेश्याः चतस्रो विद्या निर्दिश्यन्ते। तेन धर्मार्थवेदनमेव विद्यानां भाव्यं स्वीक्रियते। तत्र इमा एव विद्या उपयुज्यन्ते। तदुक्तम्—'धर्मार्थौ यद्विद्या-त्तद्विद्यानां विद्यात्वमि'ति। अपरास्तु विद्याः कामानुबन्धिन्यो भवन्ति। अतस्तासां शिक्षणं षोडशवर्षानन्तरमप्युचितं भवति। इमा विद्यास्तथाध्येतव्या याभिः अध्येता-

ग्रहणेन बुद्धेस्तृतीयगुणेन सम्पन्नः स्यात्। एवञ्च धर्मार्थवेदनभाव्यकभावनाकरणत्वं चतसृषु विद्यासु अनुगतम्। तद्भावनाकरणं विद्धात्वर्थः, स च चतुर्विधः विन्ते, विचारयति, तत्तत्त्वमान्वीक्षिक्याम्। वेत्ति जानाति, तत्तत्त्वं त्रय्याम्। विन्दति प्राप्नोति तत्तत्त्वं वार्तायाम्। विद्यते रक्ष्यते, तत्तत्त्वं दण्डनीताविति लक्षणसमन्वयः।

## आन्वीक्षिक्यादीनां विद्यात्वम्

एवञ्च सर्वविधविद्यातात्पर्यविषयीभूतयथार्थज्ञानभाव्यकभावनाकरणविद्यात्वं-मान्वीक्षिकीत्वम्। पुरुषागोचरादृष्टज्ञानभाव्यकभावनाकरणविद्यात्वं त्रयीत्वम्। विद्या-भूम्याद्यर्थज्ञानभाव्यकभावनाकरणविद्यात्वं वार्तात्वम्। अर्जनादिचतुर्विधराजवृत्तज्ञान-भाव्यकभावनाकरणविद्यात्वं राजनीतिविद्यात्वम्। एवंरीत्या विद्यानां पृथगुपन्यासः कौटिल्येन राजादीनां कृते तेषां चतुर्विधविद्याध्ययनप्रवृत्त्यर्थं कृतः।

## आचार्याणां मतभेदः

अत्र मानवा आन्वीक्षिक्या अध्ययनं 'धर्माधिकारिकम्' इति समाख्यया धर्म-ज्ञानार्थं विदधति। यतिभिः आन्वीक्षिक्यध्ययनमात्मज्ञानार्थं क्रियते। धर्मज्ञानार्थ-मान्वीक्षिक्यध्ययनविधानाद् धर्मविरोधिन्या आन्वीक्षिक्या अध्ययनं "हैतुकान् बक-वृत्तींश्च" इत्यादि निषेधान्न कर्तव्यम्। इति मानवानामाशयः। एवम्भूताध्ययनगोचराऽऽ-न्वीक्षिकी मानवमतेन त्रय्या नातिरिच्यते। यतः कौटिल्यसम्मतं त्रयीलक्षणमुक्तमान्वी-क्षिक्यां सङ्गतमेवातः त्रयीत्वमान्वीक्षिक्यामस्ति। इत्थं चोक्तकरणत्वं साधकतमत्वं मनुमते त्रय्यामेव। आन्वीक्षिक्यध्ययनन्तु तन्मत इतिकर्तव्यताभूतं भवति। तच्चोक्त-साधनतावच्छेदकम्। एतेन आन्वीक्षिक्यध्ययनस्य विधानं मनूक्तं न विरुध्यते। इतिरीत्या साधनत्वतदवच्छेदकभेदेन कारणत्वभेदेऽपि तदुभयसाधारणतया करणत्वे स्वीकृते धर्मज्ञानभाव्यकभावनाकरणत्वं त्रय्यान्वीक्षिक्योरध्ययनेऽनुमतं वर्तते। आन्वीक्षिक्या पार्थक्येन ग्रहणमिति मानवानामाशयः। एतन्मते यदा राजा धर्मार्थार्थं प्रवृत्तः, तदानेन धर्मार्थज्ञानार्थमनुपयुक्तत्वात् पृथक्तया इयमध्येतव्यैवेति नास्ति आग्रहः। यदा वेदार्थः सन्दिग्धो भवति, तदा तन्निरासस्तु विद्वद्भिः कारयितव्यः। त्रयीप्रामाण्यन्तु एतन्मते सिद्धत्वात्तदनुकूलतयैव सर्वोऽप्यर्थः स्वीक्रियते।

अत्र केचिदेतन्मतं मनोरपीति व्याचक्षते। अपरे तु न मनोरिति वदन्ति। तत्रायं विवेकः--मनुः ब्रह्मनिर्मितं लक्षाध्यायं जानान आन्वीक्षिकीमधीते, तदध्ययनस्यो-पयुक्तत्वञ्च विजानाति। यदा स शिष्यान् वेदप्रामाण्याभ्युपगन्तॄन् अध्यापयामास, तदा ते ग्रन्थैकदेशं व्यजानन् वेदमेव प्रमाणत्वेन स्वीकृत्य "वेदोऽखिलो धर्ममूलम्" इति विश्वस्य च धर्मतो नीतिव्यवस्थां सर्वामपि धर्म्यत्वेन स्वीचक्रुः। विषयान्तरं त्वज्ञान-विजृम्भितमभूत्। तन्मते वेदमतिलङ्घ्य विचारस्य प्राधान्यं नास्ति। अतः तस्योद्देश्यत्वाभावादान्वीक्षिक्यां साधकतमत्वं करणत्वं नास्ति; किन्तु वेदविचारेति-

कर्तव्यत्वात् तत्साधनतावच्छेदकत्वमेव। इदं मानवानाम्मतमनुरुध्य विद्यानां त्रित्व-मुक्तम्, अतो 'न तु मनोः' इत्युपपन्नम्।

## स्वमतम्

यदा तु वेदप्रामाण्यं सन्दिग्धम्, तदा तु विचारस्य प्राधान्यात् तदुद्देश्यकभावना-करणत्वं साधकतमत्वरूपमान्वीक्षिक्यामवश्यं मन्तव्यम्, तद् यदि राज्ञा न ज्ञायेत, तर्हि सन्दिग्धो राजा वेदं प्रति अविश्वसेत्। नास्तिक्यभावश्च प्रसज्येत, ततो मात्स्यन्यायः कामबाहुल्यमशान्तिः जनपदविध्वंस इति विचारोद्देश्यकभावनाकरणत्वस्यापेक्षि-तत्वाद् आन्वीक्षिक्याः पृथग्ग्रहणम्। वस्तुतः पुरुषागोचरादृष्टभाव्यकभावनाकरणत्वं यथा त्रय्यां तथा आन्वीक्षिक्यामपि, एवमेव विद्याविचारभाव्यकभावनाकरणत्वं त्रय्यामप्यस्तीति तदुभयमपि करणत्वं स्वरूपतो विभिन्नं तेन न साङ्कर्यदोषः, उपधेय-साङ्कर्येऽपि उपाधेरसाङ्कर्यात्। नात्र चाणक्यमनुमतयोर्विरोधः। एवमग्रेऽपि बोद्धव्यम्।

## बृहस्पतिमतम्

यथा विचारस्य पार्थक्येनानुपयोगाद् मनुमतेनान्वीक्षिक्यध्ययनं राज्ञा कृते नापेक्ष्यते, तथा अर्थव्यवस्थायै प्रवृत्तो राजा पार्थक्येन धर्मं मा विजानातु तावतापि नो हानिः। प्रजा धर्मेणात्मानं शोभयत्येव, अतः राज्ञा स्ववृत्तिममत्वा राज्ञा त्रयी नाधीता यदि, तर्ह्यपि स वार्तादण्डनीत्योरध्ययनं वृत्तित्वेन स्वीकरोतीति बृहस्पतिमताशयः।

एतन्मते धर्मो न निष्फलः; किन्तु अर्थज्ञानभाव्यकभावनाकरणत्वं बृहस्पतिना त्रय्यां न स्वीक्रियते; किन्तु उक्तसाधनतावच्छेदकत्वमात्रम्। अत्रायमाशयः—बृहस्पतिः यान् शिष्यानर्थशास्त्रमध्यापयामास, ते ब्रह्मज्ञाः कृतकृत्या न नाकभाज आसन्। तेषां कृते तदानीं कर्तव्याकर्तव्यपरिच्छेदज्ञानमप्यनुपयुक्तमभूत्। सत्यप्येवं प्रजानामर्थ-व्यवस्थार्थं रक्षणार्थं च प्रयतमानाः वार्तां दण्डनीतिं चोपयुक्ततयाऽमन्यन्त। अतस्त्रयो-साधनत्वेनोपेक्षितवन्तः। अत्रेदं बोध्यम्—एतन्मते त्रयी संवरणार्थमपेक्ष्यते, अन्यथा त्रय्या प्रतिपादितो धर्मः सर्वथा उपेक्षितो भवेत्, तर्हि "नायमधर्मरुचिः विश्वास्यः" इति जानन्ती प्रजा राजानं नानुरज्येदिति त्रयी संवरणमात्रमिति।

अत्र बार्हस्पत्या एवमाहुः—

पूर्ववद् राजा त्रयीं राजवृत्तित्वेन मा स्वीकरोतु; किन्तु तेन यात्रार्थं धर्मं पालयन्ती धर्मप्रचारान्न भेदनीया। तथा सत्येव करादिसमर्पणं च प्रजया करिष्यते। राज्ञा तु विद्वत्सङ्गतिं विदधता विद्वन्निर्देशानुसारेण प्रजयाऽनुष्ठेयो धर्मो ज्ञेयः। तावतैव त्रय्या अध्ययनमकुर्वन्नपि स प्रजां रक्षितुं समर्थ इत्येतन्मते प्रजायां लोकयात्राया उच्छेदो नास्ति। अत एव चार्वाकमतं लोकायतिकपदेन सङ्गृहीतमुपपद्यते। यतः स नीतिकामशास्त्रानुसारेण वर्तनं स्वीकरोति। तदेवाहुः—

योगाय वार्ता लोकस्य नीतिः क्षेमाय चोदिता।
त्रयी तत्रापि मघवन् लोकपक्तिप्रयोजना॥ इति।

## चार्वाकमतप्रचारको बृहस्पतिः

राक्षसान् ब्रह्मचर्यादिपालनमुपदिश्य तेषामजरत्वकामनया शुक्रस्तपस्तेपे। तपः समाप्त्यवसाने बृहस्पतिः जयन्तीं शुक्रस्य समीपे तं १० वर्षपर्यन्तं रमयितुं प्रेषयामास। तद्वर्षेषु बृहस्पतिः शुक्रस्य रूपं धृत्वा चार्वाकमतं प्रचार्य राक्षसान् मोहयामास। दशवर्षानन्तरं प्रत्यावृत्तः शुक्रः राक्षसानुपदिदेश; किन्तु ते शुक्रमतं न स्वीचक्रुः। एवं-रीत्या बृहस्पतिश्चार्वाकमतप्रचारकोऽभूत्।

## चार्वाकमतं बार्हस्पत्यत्वेनोपयुज्यते

राजनीत्युक्तात्मगुणसम्पत्तिमता कर्मकुशलेन राज्ञा लोकयात्रायै स्वीयनीत्यनुसरणं चार्वाकमतरीत्यापि स्वीकर्तव्यमेव भवति। एतन्मतेऽर्थकामौ पुरुषार्थौ, नीति-कामशास्त्रानुसारेण वर्तनं धर्मः, लोकसिद्धो राजा ईश्वर इत्युक्तं वर्तते। अतः बार्हस्पत्य-मतोपदेशेन यथा लोकमतमुपेक्षितं न भवेत्, तथा यतनीयं ब्रह्मज्ञेनापीति हृद्यम्।

चार्वाकमतं विजानन्तो असुरा बृहस्पतिमतमनुचक्रुः; किन्तु ते तमःप्रकृति-स्वभावात् स्वीकृतं चार्वाकमतं विकृतिं प्रापयित्वा अन्वतिष्ठन् इत्यतो बृहस्पतिर्न प्रतिभूः; किन्तु तमःप्रकृतयोऽसुराः। इतीदमपि मतं न बृहस्पतेः; अपि तु बार्हस्पत्यानाम्।

## ब्रह्मज्ञो राजपदाधिकारी

'ब्रह्मज्ञोऽन्तेवासी भूत्वा नीतिमधीते' इति मतं नासङ्गतम्। ब्रह्मज्ञस्यापि असर्व-ज्ञत्वादिति वेदान्तन्यायरत्नावल्यामभिहितम्। ब्रह्मज्ञः सर्वत्र समवर्ती निष्पक्षपातं प्रवर्तते, न्यायं प्रवर्तयति, शमस्य तथैव स्वभावात्। तदाहुः—

विना रागेण सर्वत्र सुखिनामनुमोदनम्।
यथाशक्ति परित्राणं दुःखिनामविशेषतः॥ इति।

'ब्रह्मज्ञनृपत्यभावे विकृतचित्तं राजानं प्राप्य प्रजापि व्यसनिनी विकृता प्रमाद्यति' इति नीतिमधीत्य ब्रह्मज्ञो कुशलश्चेत् प्राप्यते, तर्हि स एव नृपतिपदाधिकारी प्रथमो मुख्यो जनकादिवदिति प्रथमः पक्षः।

अत एव 'नृपतिपदाय शमाय च क्षमो भवति' इति कामन्दकोक्तमुपपन्नं भवति। यद्यपि ब्रह्मज्ञेण त्रय्यध्ययनं कृतं व्यर्थमेव, तथापि 'लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हति' इत्युक्तत्वात् प्रत्यक्षादिप्रमाणादिना लाकयात्रोपयोगित्वस्य सिद्धत्वात् त्रयीप्रामाण्यं स्वीकृत्य वर्णाश्रमाचारवत्वं दयाऽहिंसादिसाधारणधर्मवत्वं च अनुष्ठाय ब्रह्मज्ञेण राज्ञा लोकपालनं मात्स्यन्यायापसरणञ्च कृतं चेत्, चार्वाकमतमप्यनुष्ठितं भवति।

## ब्रह्मज्ञभिन्नोऽपि राजा

ब्रह्मज्ञोपलब्ध्यभावे तु यो राजपदाधिकारी गुणबाहुल्यसम्पन्नः, स एव—

अपारे यो भवेत्पारं अप्लवे यो भवेत्प्लवः।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति॥

इत्युक्तरीत्या राज्यपदेऽभिषिच्यते। तेन त्रयीवृत्तित्वेनाध्येयास्तत्प्रामाण्यमालोच्य तत्प्रोक्तमङ्कुशस्थानीयं धर्मानुशासनं स्वीकर्तव्यमिति बृहदारण्यकोपनिषद्वचनाज्ज्ञायते।

### बृहस्पतिमतेन चाणक्यमतसमन्वयः

बृहस्पतिमतेन ब्रह्मज्ञानां कृतेऽर्थज्ञानभाव्यकभावनाकरणत्वं साधकतमत्वं वार्तायां नीत्यां च तदवच्छेदकत्वात्मकम्, करणत्वं त्वान्वीक्षिक्यां त्रय्यां च स्वीक्रियते। चाणक्यमते तु ब्रह्मज्ञस्य राज्ञोऽभावे तत्साधकतमत्वं त्रय्यामान्वीक्षिक्यामपि अपेक्ष्यते, यतः संवरणापेक्षया लोकयात्रार्थं वास्तविकतया राज्ञा त्रयी सेव्यते, तर्हि दम्भीभावाद् अविश्वास्यत्वस्य प्रसक्तिः आत्मनि न सम्भवति।

### शुक्रमतम्

पृथिव्या लाभाद्युद्देश्यभावनाकरणत्वं दण्डनीतौ तिसृषु परासु विद्यासु तत्साधनतावच्छेदकत्व इति शुक्रमत एकैव दण्डनीतिर्बोध्या। शेषं पूर्ववद्बोध्यम्।

### शुक्रचाणक्यमतसमन्वयः

अनेनापि मतेन सह चाणक्यमतस्य पूर्ववत् समन्वयो बोध्यः।

### विद्यानां निन्दास्तुतिबोधकवाक्यसमन्वयः

चतसृणामपि विधायकानि स्तुतिपराणि निन्दापराणि निषेधकानि च वचनान्युपलभ्यन्ते। यथा—'शुष्केनात्मानमन्विच्छेत्,' 'हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' इति। तत्र अधिकारिभेदेनेदृशानां वचनानां समन्वयो बोध्यः, यथा बालको न्यायशास्त्राध्ययने यदा प्रेरणीयः, तदा विधिवाक्यं प्रेरकं बोध्यम्। न्याय एवास्थिरः स न विद्यान्तरमध्येतुं धर्मार्थौ वा विचारयितुं चेष्टते, तदा निन्दया न्यायशास्त्रस्याध्ययनान्निवृत्तिः। विशेषस्तु सेतुबन्धव्याख्याने श्रीभास्कराचार्यकृते (७७ पृ०) द्रष्टव्यः।

### विद्यानां नीतित्वम्

आन्वीक्षिक्यां फलसाधनत्वं योगीश्वरेण पुराणन्यायमीमांसेत्यादि वचनप्रमाणेन साधितम्। तद्वद् विद्ययोर्बलाबले तु यावन्न आन्वीक्षिक्या विविक्ते भवतः, तावद् विद्यातात्पर्यं दुरवगाहमिति फलसाधनत्वमान्विक्षिकीनिष्ठमनुमेयं भवति। तदुक्तम्—'बलाबले चैतासां हेतुभिरन्वीक्षमाणः" इत्यादि।

किञ्च, हेतुत्वं कार्यनिरूपितं तस्य परिष्कृतं रूपमनन्यथासिद्धत्वे सति कार्यनियतपूर्ववृत्तित्वम्। अनन्यथासिद्धत्वञ्च "यत्र यत्र प्रामाणिकानां नियतपूर्ववृत्तिषु अकारणत्वव्यवहारः, तत्तद्भिन्नत्वम्" इत्युक्त्या स व्यवहारः प्रामाणिकापौरुषेयशब्दाधीन एव मन्तव्यः, तत्रैव भ्रमप्रमादादिदोषाभावात्। अतः आन्वीक्षिक्या विचार्यमाणस्य हेतुत्वस्य शब्दप्रमाणप्रमितं तदुपजीव्यभूतायामान्वीक्षिक्यां विद्यमानं फलसाधनत्वं

शब्दप्रमाणेन प्रमितम्। एवं परस्परविरुद्धानां वचनानामायुर्वेदादौ उपस्थितानां समन्वयः आन्वीक्षिक्या आयुर्वेदादिदृष्टशास्त्रार्थे प्रत्येतव्यो भवति। तथासत्येव चिकित्सा-साफल्यं दृश्यते। एवंरीत्या आन्वीक्षिक्यां स्थितं विचारसाधनत्वं प्रत्यक्षानुमानाभ्यां प्रमितं भवति। इत्यस्यां विद्यायां नीतित्वं निर्विवादम्।

त्रय्यां फलसाधनत्वं "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमप्रामाण्यात्" इति गौतमशब्देन प्रमितम्। आयुर्वेदादिद्वारकेषु वैदिकविधिष्वदृष्टसाधनेषु दृष्टफलपर्यव-सितेषु प्रत्यक्षानुमानप्रमाणप्रमितत्वं निर्णीतम्। वार्तान्तर्गतानि कृष्यादिकर्माणि नक्षत्रविशेषे योगविशेषे करणविशेषे तिथिविशेषे कृतानि सफलानि भवन्ति। तत् सीताध्यक्षप्रकरणे स्पष्टम्। अत्रापि मूलभूतं वचनं वेदवचनं मन्वते। तस्माद् वार्तायां निर्णीते फलसाधनत्वे शब्दप्रमाणप्रमितत्वं निर्विवादम्। वार्ताविद्यामधिगत्य तदनुसारेण बीजावापादिकार्ये सम्पन्ने दृष्टं फलं धान्यं समुदेति। इति प्रत्यक्षानुमानाभ्यामपि वार्तानिष्ठे फलसाधनत्वे प्रमितत्वं निर्णीयते।

राजविद्यायां नीतित्वं तु स्पष्टम्। तथा हि—राजनीतिर्न्यायतोऽर्जनादिचतुष्टयं विदधाति। तत्र न्यायत इत्यविवक्षणे अर्जितं धनं परेषामामिषं शत्रुत्वजननायनरागयो-र्वर्धकं भवति, "धर्मार्जितो धान्यषड्भागादिना स हि परेषामनामिषभूतो भवत्यक्षयश्च" इति जयमङ्गलोक्तः। न्यायश्च मन्वाद्युपदिष्टोऽर्थ एव भवति, तस्यैव वेदानुमोदितत्वात्। एवं च न्याये शब्दप्रमाणप्रमितत्वं सिद्धम्। सिद्धेऽपि तस्मिन् प्रत्यक्षानुमानविरुद्धं चेत्तर्हि नीतित्वेन नानुमनुते इदमर्थशास्त्रम्। यथा पतिमरणानन्तरं सहगमनं मन्वादिभिरु-पदिश्यते। तत्प्रत्यक्षानुमानतः लोकरञ्जकत्वाभावाद् न विधिं निर्माय देशे स्त्रीणां सती-गमननीत्या न बलादापाद्यत इति अराजविद्यायां प्रत्यक्षानुमानप्रमितत्वमपि शब्द-प्रमाणप्रमितत्वेन सह समास्त इति अस्यां विद्यायां नीतित्वं समन्वीयते।

## विद्याध्ययनविधिस्वरूपम्

अथ विद्याध्ययनविधिविषय उच्यते। राजा लोकपालनं कर्तुं वाञ्छन् "लोक-रक्षणकामः सर्वा अपि विद्या अध्येताम्" इत्येको विधिः कल्पते, तदनुध्यायकौटिल्येन राजवृत्तौ ताः वृत्तित्वेनोक्ताः, तथैव अध्ययनक्रमोऽपि तेन निर्दिष्टो राज्ञः कृते। अतोऽमुं विधिमनुसृत्य शासकेन चतस्रो विद्या अध्येतव्या एवेति स्थितम्। "यस्य तु लोकरक्षणे न कामितम्; किन्तु पृथग् आत्मविज्ञानम्, धर्माधर्मौ, अर्थानर्थौ, नयानयौ, योगक्षेम-निष्पत्त्यनिष्पत्ती वातेन तत्तत्फलोद्देश्येन एका विद्यैव अध्येतव्या" इत्यपरो विधिः। इह विधिद्वयं संयोगपृथक्त्वन्यायेन "दध्नेन्द्रियकामस्य जुहुयात्", "दध्ना जुहोति" इति वाक्यजविधिवद् बोध्यम्।

## विद्यानामाकाङ्क्षानुसारेण उपयुक्तता

लोकरक्षणार्थमिमा विद्या उपयुज्यन्ते कथमित्यपि प्रसङ्गाच्चिन्त्यते। लोकोऽयं

निसर्गतो बुभुक्षुतोऽन्नं वाञ्छत्येव तत्साधनतया कृषिं पशुपालनं वाणिज्यञ्च सम्पादयितुं चेष्टते। तत्साफल्याय पशुपालनेतिकर्तव्यतावोधिका विद्यावार्तापि आकाङ्क्षतत्वादुपादेयतां गच्छति। उत्पन्नस्य स्वयमर्जितस्य धनस्य भोक्तृत्वं स्वामिनोऽर्थप्राप्तम्; किन्तु नैके जीवाः सन्ति येऽन्नादिजातं विलुण्ठेयुः, भक्षयेयुश्च। ततो रक्षणपुरःसरं फलभोगाय रक्षणापेक्षया नीतिः लोके अवतरति। नीतिशासनमपराधिनां कण्टकानां कृते दण्डप्रणयनेन कर्तव्यं भवति। दण्डप्रणयनसमये वधपरिक्लेशार्थहरणान्यतमे लोके कोपस्याभ्युदयेन भाव्यमेव। एवं सति प्रजाविरागो राजनि नियत एव। इष्टापत्तौ च पुनरपि नीतिर्दुःशका इति हेतोः, प्रथमतः जनपदे राज्ञा धर्मः प्रचारणीयः। अयमेव विनयः इन्द्रियजयात्मकः। तन्महिम्ना पापकल्पनया पापान्निवृत्तौ पापध्वंसे वा प्रवृत्तो विद्वान् प्रायश्चित्तं चिकीर्षति तस्मिन्कृते नरकभाक्त्वं न स्यात्। प्रायश्चित्तं राजदण्डस्वरूपमपि वर्तते। तच्चापराधिभिः स्वीकृतं कोपभाजनं भवति। नापि दण्ड्याः पुनरपराधं कर्तुं प्रवर्तन्ते। इदञ्चापरं शासनस्य महत्त्वं यद्राज्ञा अपराधी शासितो यदि भवति, तर्हि स यमशासनाधिकारी न भवति इति। तदुक्तं गरुडपुराणे—

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम्।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः॥ इति।

इत्येवंरीत्या राजनि प्रजायां च यावत्पर्यन्तं धर्मप्रयुक्ता नरकभाक्त्वभावना दण्डस्य प्रायश्चित्तभावना च समुदेति, तावद् एव दण्डोऽपि प्रायश्चित्तं शास्त्रानुमोदितं प्रसज्यत इति। तत्सत्त्वे तीक्ष्णमृदुदण्डयोरप्रसङ्गाद् यथार्हदण्डस्य पूज्यत्वात्। अतो नरकादिप्रपतनकल्पनाप्रसूतये प्रमाणमूर्धन्यतया शब्दराशिर्वेदः, तदनुयायिन्यो विद्याश्चाध्येतव्या भवन्ति। तत्समूह एव त्रयी विद्या। एवंरीत्याऽऽकाङ्क्षानुसारेण लोके विद्यानामुपयोगित्वं क्लृप्तम्। इदमेवानुसृत्य कामन्दकेन इन्द्रियजयविद्यावृद्धसंयोगः, विद्याविभागः, वर्णाश्रमधर्मव्यवस्था, दण्डमाहात्म्यञ्च इत्येव पञ्चप्रकरणान्युपन्यस्तानि क्रमेण। संयोगपृथक्त्वन्यायेन विद्यानां फलसिध्यर्थत्वं ज्ञात्वा कौटिल्येन स्वमतं निरूपयता राजवृत्तौ आन्वीक्षिक्यध्ययनं तिसृणां विद्यानामध्ययनेन सह व्यधायि। तदिदं कौटिल्यस्य गौरवं स्मरणार्हं वर्तते।

### आन्वीक्षिक्यध्ययनस्य अपेक्षा

कौटिल्यात्पूर्वतनैः कतिपयैराचार्यैः भण्डधूर्तनिशाचरकर्तृकत्वं वेदस्य आशङ्क्य तत्रान्धविश्वास्यत्वमप्रामाणिकत्वञ्च चाटुकार्या वाण्या संसाधितम्। वेदाध्ययनप्रयुक्तजीविकाबुद्धिपौरुषहीनेत्याघोष्य च शङ्कानां माध्यमेन जनतायां वेदपराङ्मुखता सञ्चारिता। तासां समस्तानां शङ्कानामपसारणमान्वीक्षिक्या सन्दर्श्यते। कार्यकारणभावः, बलाबलविवेकः, सत्त्वे व्यसने चाभ्युदये अविकारकरो धृतिभावः, तर्कसहचितः मतिभावः, आपाद्यापादकभावप्रकाशनमन्वयव्यतिरेकौ व्याप्यव्यापकभावः, लाघवगौरव-

समीक्षोपायश्च । अनयैव त्रयीप्रामाण्यं भारतस्य जीवातुभूतं समास्थाप्यते । तेन राज्यस्य सङ्घटनं स्थिरीकृतं भवति । उपाध्यायनिरपेक्षाकारस्तु न्यायशास्त्रम् आन्वीक्षिकीपदेन व्यवहरति । अनेकाः शङ्का उत्थाप्य षष्टितन्त्रे अप्रामाण्यस्य व्यवस्थापितत्वात् तन्निरासार्थं न्यायस्यैव सामर्थ्यात् । अन्यथा परिष्कृतपरिगणितभाषां विना शङ्कासमाधानेन विना अन्तेवासिनः षष्टितन्त्रं प्रामाणिकत्वेन न मंस्यन्ते ।

## साङ्ख्यस्य न्यायशास्त्रत्वम्

अथ आन्वीक्षिकीविद्यानिरूपणे साङ्ख्यस्य सङ्ग्रहः कृतः "न्यायशास्त्रं साङ्ख्यादि", "सङ्ख्यावान् पण्डितः कविः सङ्ख्या विवेकः तस्या इदं शास्त्रम्" इति टीकोक्तेश्च । सङ्ख्याया बुद्धिविचारणार्थकत्वाद् विवेकघटितं षष्टितन्त्रं साङ्ख्यशास्त्रं भवति । तद्घटकत्वेनापेक्षितत्वाद् विवेकस्य दृष्टिः कौटिल्येन न्यायभाष्यं निर्माय विकासभावं प्रापिता । तद्द्वारा षष्टितन्त्रं साधितमिति न्यायपदेन साङ्ख्यशास्त्रं गृहीतं टीकाकृता । अनयैवोक्त्या कौटिल्यस्य न्यायभाष्यकर्तृत्वमपि ध्वनितं भवति ।

## सङ्ख्यापदार्थः

अथ सङ्ख्याया विचारणार्थकत्वं बोधयितुं सङ्ख्यास्वरूपं विमृश्यते । सा बुद्धिविषया भवति । यतः "इमौ द्वौ, इमे त्रयः" इत्यादि प्रतीतयः द्रव्यावलम्बिन्यो यत्र स्वीक्रियन्ते, तत्र तु तद्विधेयत्वं, यत्रासौ गुणो भवितुमर्हति । एवं स्थितिः सर्वस्यां तथाविधायां प्रतीतौ न वर्तते, गुणादीन् विषयीकृत्यापि तथाप्रतीतेः । अतोऽस्य भाष्यस्य कौटिल्येनेतरनिरपेक्षतया कृतेषु स्थल विशेषेषु निर्मितत्वेऽपि परम्परायातत्वं मन्तव्यम् । भाष्यत्वं तु गुणे गुणानङ्गीकारात् । अतो बुद्धिविषयतैव सङ्ख्या । बुद्धिश्च अयमेक इत्याद्यपेक्षाबुद्धिरत्र विवक्षिता । नैयायिकमतेन तस्याः त्रिक्षणावस्थायित्वं द्वित्वप्रत्यक्षानुरोधात् स्वीक्रियते । यथा अनुमित्यादिकार्यानुरोधेनेच्छादीनां चतुःक्षणावस्थायित्वं स्वीक्रियते, पक्षताग्रन्थोल्लेखात् । यथा वा रसप्रतीत्यनुरोधेन काव्यव्यापारप्रसूता व्यञ्जनजनिता बुद्धिः चतुर्दशक्षणपर्यन्तमनुस्यूता मन्यते, तथैव अपेक्षाबुद्धेः द्वित्वादिविषयताप्रत्यक्षं यावत् स्थायित्वं कल्पते । यतो हि अपेक्षाबुद्धेरुक्तायाः सत्त्व एव द्वौ त्रय इति प्रतीतिः सम्भवितुमर्हति । यस्य अपेक्षाबुद्धिः, तस्यैव सङ्ख्याप्रत्यक्षम् । अत एव पुरःस्थितघटस्य साधारण्येन प्रत्यक्षमिव न पुरःस्थितघटसमवेतद्वित्वस्य प्रत्यक्षं भवति । सङ्ख्येयप्रत्यक्षे सति सङ्ख्या प्रत्यक्षीक्रियते । इदमेव प्रत्यक्षं विचारणा विवेको वा उच्यते । तदाहुः–'चर्चा सङ्ख्याविचारणा' इति । नन्वेवं सङ्ख्याया गुणरूपत्वमेव व्यपगतं भवेदिति चेत्, न, सर्वसाधारण्येन सङ्ख्यापदार्थः विषयतासम्बन्धेन अपेक्षाबुद्धिमत्त्वमेव लाघवादिति वदामः । यदा द्रव्यं विशेष्यीकृत्य द्वौ इत्यादि प्रतीतिर्भवति, तदा अपेक्षाबुद्धेर्विषयतासम्बन्धः समवायात्मक एव तत्कार्यकारित्वात् । तत्कार्यञ्चास्वातन्त्र्य-

रूपम्। एवंविधं समवायत्वं नैयायिकानामप्यभिमतं समवायनिरूपणावसरे वैशेषिकभाष्ये, इहेदमिति बुद्धिर्यतो भवतीति व्याख्यायां न्यायकन्दल्याञ्च तथैवोपलम्भात्। एवञ्चापृथग्भावेन भाने सति बुद्धिसमवायसम्बन्धेनोत्पन्ना द्रव्योपादानोपादेया। अन्यत्र तु प्रतिभातः सम्बन्धो न समवायः; किन्तु विषयतारूपः। सङ्ख्येयानां पिपीलिकादीनां नाशेऽपि "पिपीलिकानां शतम्" इत्यादि प्रतीतिर्भवतीति बौद्धे पिपीलिकापदार्थोपपत्तिः न्यायकन्दल्यां स्वीकृता, ओपचारिकी वा सा मन्तव्या। राजनीतौ तु जगतः मृगतृष्णातुल्यत्वं स्वीक्रियते। अत एव सर्वस्य पदार्थस्य "अहं बहु स्याम्" इत्युक्ते आत्मरूपत्वेन बुद्धिमत्त्वं समवायिकारणत्वं च सहजत एव उपपन्नं भवति। एवञ्च विचारणात्मकबुद्धिमत्त्वमुपपादयितुं चाणक्यः साङ्ख्यमान्वीक्षिक्यामन्तर्भावयामास साङ्ख्यमित्यादिना। यथा राजनीतौ साङ्ख्यं न्यायः, तथा योगेऽपि स एव। स च वानप्रस्थाश्रमिभिरनुष्ठेयोऽत्र न विवक्षितः; किन्तु तर्कात्मकः न्यायवैशेषिकैः प्रमाणीकृतः।

## योगस्तर्कः, प्रत्याहारादिस्वरूपाङ्गसहितः

अत्र प्रत्याहारः, ध्यानम्, प्राणायामः, धारणा, तर्कः, समाधिरिति षडङ्गो योगो भवति। तेषु "धारकेण प्रयत्नेन वशीकृतस्य मनसः तत्त्वबुभुत्साविशिष्टेनात्मना सह संयोगो योगो भवति। स च राज्ञा गृहस्थेन राजनीतिविदा तर्करूपतया साधनीयः" इति कौटिल्यस्य मतं भाति। तदनुबन्धितया यमः साधारणो धर्म उच्यते। नियमस्तु स्ववर्णाश्रमधर्म एव। तथा च धर्ममनुतिष्ठता राज्ञा तर्ककुशलेन भाव्यम्। तस्यैवं स्वरूपम्—व्याप्यारोपेण व्यापकारोपः, तद्धारायां यदेकत्र मनसोऽवस्थानं समाधिः। स च तत्त्वबुभुत्सायां सत्यां भवति, तस्याश्चिन्तारूपत्वात्, ध्यानविभावत्वाच्च। कामिनीज्ञानान्यज्ञानं प्रति प्रतिबन्धकत्वं तज्जिज्ञासायां क्लृप्तम्। अतस्तत्त्वबुभुत्सावत्त्वमात्मनि अपेक्ष्यते। तथा योगलक्षणे निविष्टः धारकः प्रयत्नोऽपि नीतिरूपः। यतो ह्यत्र साफल्यस्य नैयत्याद् हर्षसामग्री वर्तते। सा नीतिलक्षणे विवेचिता। किञ्च, ज्ञानप्रभा आनन्दप्रभामिश्रिता सती यदा क्रियाप्रभासंयुता भवति, तदा सा शक्तिरुच्यते, इत्यपि सविस्तरं यथास्थानं प्रतिपादितं वर्तते। एवञ्च ज्ञानप्रभायां सुखानुभवेन मनसो यद्यवस्थापनं क्रियते, तर्हि तत्र धारकप्रयत्नो भवति। नीतिशास्त्रं हि क्रियापर्यवसायि समस्ति। यद्येतच्छास्त्रानुयायित्वं प्रतिज्ञायते अनुभूयते च, तर्हि साफल्यं चेतसो रतिरपि सिद्धैव।

## क्रियासातत्ये विरोधित्वप्रतिबन्धकता

अपि च नीतेः सातत्ये क्रियाकूटस्य धारायामेतावत्सामर्थ्यं यद् विपरीतासम्भावनादितत्त्वस्य प्रतिबध्यता, क्रियायास्तथाविधप्रतिबध्य-प्रतिबन्धकभावस्य क्लृप्तत्वात्। तद्यथा धाराप्रवाहन्यायेन कस्मिंश्चिद्वस्तुनि क्रियासातत्यं यदा अनुभूयते,

तदा अन्तराले सम्भूतस्य क्रियाविच्छेदस्य वस्तुनः पार्थक्यस्य वा अनुभूतिर्न भवति; किन्तु सैवेयं गङ्गा चलचित्रे स एवाश्व एक इति प्रतीतिर्भवति। एवमेव विरोधि-दृष्टितिरोधानमपि क्रियासातत्यफलं स्मर्तव्यम्। स्वगृह एव उपर्यधोदेशभेदेन बाला यान्ति आयान्ति उपद्रवन्ति च, तथापि तेषां शरीरे नाध्वश्रमोऽनुभूयते। एतेन धारक-प्रयत्नेन मनसश्चाञ्चल्यं निरुध्यते, तदेव मनसो धारणम्। यद्यप्येतेनैव कार्यसम्भवे तत्त्वबुभुत्सायाः निष्प्रयोजनत्वं भाति, तथापि तर्कार्थं तस्या उपयुक्तत्वं क्लृप्तम्।

### तर्के तत्त्वबुभुत्साया उपयोगः

तर्को हि व्याप्यारोपेण व्यापकारोपः। अयं हि आहार्यः, यत एतदारो-पस्य सामग्र्यां आपाद्यव्यतिरेकनिश्चयः आपाद्यव्याप्यापादकनिश्चयेन सह गृहीतो वर्तते। अत एव व्यापकारोपस्य उक्तसामग्रीबलाद् आहार्यनिश्चयत्वं सिद्धम्। आहा-र्यश्च बाधज्ञानकालीनेच्छाजन्यो भवति। अत एव तस्य न प्रतिबध्यत्वं नापि प्रति-बन्धकत्वम्; किन्तु आपत्तिरेव मूलशैथिल्येष्टापत्त्योरभावे विपरीतग्रहप्रतिबन्धिका भवति, इति त्वन्यदेतत्। आहार्यस्य तर्कस्योत्पत्तये इच्छायाः कारणत्वस्य क्लृप्तत्वाद् बुभुत्सानिवेशो योगलक्षणे कृतः। स एव धारावाहिकश्चेत् समाधिर्भवति। तार्किको राजा समाधिबलाद् अकार्यान्निवर्तते। किञ्च, तार्किकः शास्त्रेषु कृतपरिश्रमः प्रतिभा-सम्पन्नः अनूचानो भवन् यदभ्यूहति, आर्षं तद्भवति। शबरस्वामिभिरपि आत्मतुष्टि-प्रामाण्यविचारे अनूचानदृष्टिरेव प्रमाणत्वेन स्वीकृता। तथा च राजनीतौ आन्वी-क्षिकीपदेन पूर्वपरिष्कारानुसारेण विचारज्ञानभाव्यिका साङ्ख्ययोगं वैशेषिकञ्च संगृह्णाति, ताभ्यामपि योगसम्भवात्। तदुक्तम्—

> प्रत्याहारस्तथा ध्यानं प्राणायामो धारणा।
> तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते॥ इति॥

तर्कधाराप्रवाहे यथा शमादीनामुत्पत्तिः, तथा दोषप्रकोपोऽपि जायेत, तर्हि शमनं कथं भवतीत्युच्यते।

### तर्कजन्यश्रमपरिहारोपायः

शरीरान्तः सञ्चारिणमुदानवायुं वशीकर्तुं यः शक्नोति, स तद्वायुमुखेन शिरासु रसं सञ्चारयति चेत्, आरोग्यं भजत इत्यायुर्वेदेन सिद्धम्। आकर्षणं तैलस्य रोमकूपद्वारा शरीरे उदानवायुना क्रियते, यतः स ऊर्जाबलप्रदः। तदुक्तम्—

> उरःस्थानमुदानस्य नासानाभिगलांश्चरेत्।
> वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिप्रदः॥ इति॥

बलप्रदस्याहारपरिणामस्य रसस्य सञ्चार उदानेन यथा भवति, तथा ध्यानादिभावे-

नापि हृद्य ओजस उत्पादकः पदार्थः शरीरान्तः प्रवेशयितुं शक्यः, तेनापि आरोग्यलाभ इत्यपि नाट्यदर्शनमाधारीकृत्य निर्णीयते। नाटकदर्शनमात्रेण समाजो विना इन्द्रियार्थसन्निकर्षं सञ्चारिभावानां साधारणीकरणव्यापारमहिम्ना चेतसि आस्वादसुखमनुभवति, तदानीं रजस्तमोभवान् विकारा अपि अभिभवन्ति। तदिदं भावप्रकाशने व्यक्तम्—

श्रुता दृष्टाः स्मृता ध्याता भवन्ति स्थैर्यहेतवः ॥ इति।

## कुण्डलिनी जागृतिः, ईश्वररूपञ्च

एवञ्च ध्यानेनापि श्रमपरिहारार्थमपेक्षितो हृद्य ओजस. उत्पादको रसः तार्किकेण आत्मशरीरे सञ्चारणीयः। एवंविधयोगेन गुरुभक्तौ रत एकाग्रभूमिकायां स्थितः क्रियाशक्तिम् आनन्दप्रभामिश्रितज्ञानप्रभासंवलितां प्राप्नोति। उपलब्धेयं शक्तिः स्वतन्त्रा ईश्वरस्वरूपा तस्याः स्थानं मस्तिष्कं समास्त इति भावप्रकाशनतो ज्ञायते। एवमेव तर्कधारायां सत्यां सिद्धायां कुण्डलिनी अपि जागृता भवतीति अस्मिन् योगे नास्ति न्यूनता।

## लोकायतनिरुक्तिः

मूलकृता आन्वीक्षिक्या विभजनं कृतवता साङ्ख्ययोगाभ्यां सह लोकायतमपि संगृह्यते। तस्यैवं व्याख्यानं "लोकाय बुद्धिं तनोति" इति। केचित्तु लोकेषु आयत्तं प्रसिद्धमित्याहुः, तन्न, यतः लोकेषु प्रसिद्धं चार्वाकमतमपि शास्त्रज्ञानप्रसूतमेवेति न भवति, मिथ्याज्ञानवासनाप्रयुक्तत्वस्यापि तत्र सम्भवात्। तथासति नीतिविरुद्धाचरणस्यापि सम्भव आपद्येत। तथासति नीतिकामशास्त्रानुसारेण वर्तनं धर्म इति चार्वाकमतं विरुद्धमापद्येत। एवञ्च चार्वाकमतेन परलोकस्य सन्दिग्धत्वेऽपि तद्विरुद्धं नाचरणीयम्, अशुभस्यापादानप्रसङ्गात्। अतोऽस्य मतस्य पूर्वपक्षतया आन्वीक्षिक्यां ग्रहणमिति।

## चार्वाकमतग्रहणम्

ननु मतान्तरेषु सत्स्वपि चार्वाकमतमेव कुतः गृहीतमिति चेत्, न, मतान्तरेषु नैष्कर्म्यमस्ति। अत्र तु सकलं प्रत्यक्षसिद्धमनुष्ठेयं भवति। चार्वाकेण "ऋणं कृत्वा घृतं पिबेत्" इत्युक्तम्। एतन्मते लोकसिद्धो राजा ईश्वरो वर्तते। तस्मात् चार्वाकमतं नीतिशास्त्रमपेक्षते। अत्र नैष्कर्म्यं नास्ति, अतः मतान्तरमनुल्लिख्य चार्वाकमतं संगृहीतम्।

नन्वेवं चार्वाकमतस्य पश्चादुक्तस्य पूर्वपक्षत्वं कथं सङ्गच्छत इति चेत् समाधीयते—

## चार्वाकमतस्य पश्चाद्ग्रहणम्

पश्चादुक्तोऽप्यर्थः अर्थानुसन्धानौचित्येन पूर्वं योज्यः। "अग्निहोत्रं जुहोति",

"यवागूं पचति" इत्यत्र 'यवागूं पचति, अग्निहोत्रं जुहोति' इत्यन्वयः स्वीक्रियते। तथा धर्मार्थयोः परीक्षणे कर्तव्ये अनेके सन्देहाः समुद्भवन्ति, तेषु सत्सु षष्ठाध्यायोक्तदिशा धर्मार्थयोरभिनिवेशो न स्यात्। यदि न विचार्यते, तर्हि नास्तिकमतेनापि वेदाप्रामाण्यं साधयितुं शक्यते। एवंविधाः सन्देहाः चार्वाकादिमतेषु निरूपिताः, तेषां निरासः विवेकपूर्वकं न्यायवैशेषिकपद्धत्या सम्पाद्यते। तथासति धर्मार्थयोरभिनिवेशः स्थिरीक्रियते, तेन सत्त्वमप्युत्पद्यते। अतो लोकायतस्य पूर्वपक्षत्वं सूपपन्नम्।

### चार्वाकमतस्य पश्चाद्ग्रहणे विशेषः

ब्रह्मज्ञो राजा कृतार्थः कालं चार्वाकमतेन क्षपयतु स्वर्गस्याकाम्यत्वान्नरकभयाभावाच्च, इति बोधनार्थं पश्चादान्वीक्षिक्या ग्रहणम्।

किञ्च, शास्त्रसिद्धान्तस्याप्रामाण्यं ख्यापयन्तः शब्दस्य अप्रामाण्यं साधयितुं चेष्टन्ते। तत्प्रत्याख्यानाय चार्वाकमतमाश्रित्य "प्रत्यक्षप्रमाणेन शब्दोऽप्रमाणं चेत्, तवापि शब्दः न प्रमाणम्" इत्येव जल्पः कर्तव्यो भवति। इत्थञ्च आन्वीक्षिकीघटकतया लोकायतमतस्य वादविशेषे अभ्यर्हितत्वम्। तथा प्रत्यक्षतः सुखसाधनभूतायां नीतौ आनन्दमयत्वज्ञापनार्थमुपयुक्तत्वं भवतीति लोकमतसंग्रहार्थं चार्वाकमतमपेक्ष्यते। अतः पूर्वपक्षरूपेण उपस्थापितं सदपि चार्वाकमतं पश्चान्निरूपितं मूलकृतेति दिक्।

### धर्मविद्याऽप्रत्याख्यानम्

ब्रह्मज्ञोऽपि राजा चार्वाकमतसापेक्षः लोकयात्रातत्त्वं जानन् धर्मरुचिप्रत्याख्यानं न कुर्यात्। अन्यथा अर्थमात्ररुचिरयमविश्वस्तः स्यात्। अथवा केनचित्कृते नास्तिक्यप्रचारे स्वयं सन्दिहानः आन्वीक्षिकीमजानानो लोकयात्रासाधनत्वसौष्ठवं त्रयीविद्यायां असंपश्यन् परलोकाभावं न प्रतिजानीयात्। किं बहुना, परलोकापेक्षी राजा सदाचारेषु तत्साधनत्वं जानानो लौकिकं साध्यसाधनभावं तत्र जानीयाद् यदि, तर्हि सदाचारोऽप्युपेक्षाविषयो न स्यात्। स्वयं तन्मना अनुतिष्ठेत्, न स्याच्च लोकयात्रोच्छेदोऽपि इति लौकिकसाध्यसाधनभावज्ञापनार्थं लोकेषु मैत्रीपूर्वकं परस्परसापेक्षायाः सङ्गतेः स्थापनार्थं चाप्रत्याख्यानं धर्मविद्याया अवश्यं विधेयम्। अथ आन्वीक्षिक्याः त्रीणि प्रयोजनानि। तत्र प्रथमं प्रयोजनं विद्यानां बलाबलविचारः, सोऽभिधीयते।

### आन्वीक्षिकीप्रयोजनेषु विद्यानां बलाबलविचारः

तथा हि—विद्यानां प्राबल्यं दौर्बल्यञ्च ज्ञापिकाभिः क्वचिद् उत्पादिकाभिर्युक्तिभिः बोध्यम्। यथा वेदविद्या स्मृत्यादि विद्यापेक्षया प्रबलेति सर्वसम्मतम्; किन्तु "वेदं कृत्वा वेदिं करोति" इति श्रुतिबोधितं वेदकरणानन्तर्यं वेदिकरणे "क्षुते आचामेत्" इति स्मृत्या बाध्यते युक्त्या। तस्यायं भावः—वेदवेदिकरणे आनन्तर्यं धर्मः, पदार्थवृत्तिः तस्य प्रसक्तिः पदार्थसमुच्चये सति सम्भवति। पदार्थसमुच्चयान्तर्गतं क्षुते आचमनम्,

तच्च स्मृत्या पूर्वमेव बोधितम् । पदार्थसमुच्चयसापेक्षा तदुत्तरकाले प्रसक्ता श्रुतिः आनन्तर्यपदार्थधर्मरूपानन्तर्यबोधिका दुर्बला इति वेदकरणानन्तरं क्षुत्प्रसक्तौ तत्प्रयुक्तमाचमनं कृत्वा वेदिं कुर्यादिति 'वेदं कृत्वा वेदिं करोति' इति वाक्यस्य अर्थ उच्यते मीमांसकैः । अन्यथा "युक्तिहीनविचारे तु धर्महानिः प्रजायते" । यथा वा अर्थशास्त्रं धर्मशास्त्रापेक्षया दुर्बलं मन्यन्ते विद्वांसः । तथापि क्वचिद् अर्थशास्त्रं प्रबलं भवति । यथा चौर्ये कृते धर्मशास्त्रेण "स्तेनो दण्ड्यः" इति निर्णीयते; किन्तु प्राण-बाधायामुपस्थितायां बुभुक्षुणा (धनधान्ये प्रचुरमात्रायां स्थितेऽपि यः स्वामी न प्रयच्छति बुभुक्षवे, स हीनकर्मा ) दिनत्रयपर्यन्तं भोजनस्यालाभे हीनकर्म चौर्यं कर्तुं शक्यत इत्यर्थशास्त्रेण विहितं चौर्यं तदानीं न दोषावहम् । एवमेव धर्मस्य प्राबल्येऽपि क्वचिद् राजशासनस्यापि प्राबल्यं भवतीत्यादि वैदिकसिद्धान्तसंरक्षिण्यां व्यक्तम् । सोऽयं विद्यानां बलाबलविवेकः आन्वीक्षिक्या भवति ।

## आन्वीक्षिक्याः द्वितीयं प्रयोजनम्

व्यसने अभ्युदये च मनस एकरूपतया अवस्थापनमान्वीक्षिक्याः द्वितीयं प्रयोजनम् । प्राणिनां शत्रू हर्षशोकौ भवतः । अभिलषितेष्टसम्पत्त्या स्वामी हर्षेणोल्लसितः समुद्धतो भवति, सम्पत्तेर्मदमानकारणत्वेन प्रतिपादितत्वात् । एवमेव शोकोऽपि तथैव । यतः स हि प्रतियोगिनि प्रीत्या तन्नाशासहिष्णुत्वरूपो द्वेषः । सति च तस्मिन् नीच-मध्यमप्रकृती मूर्च्छां मृतिं वा अनुभवत इति सोऽपि जीवनस्य शत्रुः । अनयोरुभयोरपि अपसारणं विवेकेनैव कर्तव्यं भवति । तच्च आन्वीक्षिक्या सम्पादनीयमित्येवंरीत्या अस्या द्वितीयं प्रयोजनं सिद्धम् । अस्याः तृतीयं प्रयोजनं प्रज्ञावाक्यक्रियावैशारद्यम् ।

## प्रज्ञावैशारद्यम्

प्रज्ञादीनां वैशारद्यं रजस्तमसोरपसारणे समृद्धे सत्त्वे च सति भवति, यतः नैर्मल्यं सत्त्ववर्धनेन भवति । तदुक्तम्—

'निर्विचारवैशारद्ये अध्यात्मप्रसादः' इति ।

प्रज्ञावैशारद्यं कथं भवतीत्यधोनिर्दिष्टेन पद्येन स्फुटं भवति—

मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ।
शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः ॥ इति ।

शास्त्रं सम्यग्ज्ञात्वा इष्टसाधनत्वविवेचनपुरस्सरं प्रवृत्तिः कस्यचिद् भवति । अपरस्य तु जन्मान्तरीयवासनावशादिष्टसाधनत्वं बुद्ध्वा सा भवति । तत्रापि कस्या-श्चिन्नीत्यनुकूलत्वं तदननुकूलत्वञ्चेति भेदेन प्रवृत्तेर्भेदो भवति । एतासु प्रवृत्तिषु या लोकव्यवहारं पूर्वजन्मानुवृत्तसंस्कारं वा अनुबध्नाति, यथा पक्षिणां वृक्षकोटरे गृह-

निर्माणादि प्रवृत्तिः। नत्र मोहस्यावरणमपि दृश्यते। तेषु इष्टानिष्टसाधनाविवेचनासामर्थ्यात्। मनुष्यसमाजस्यापि प्रवृत्तिः गुरुशिक्षया तदुपदिष्टहितावहेषु साधनेषु समस्ति। अनादिपरम्पराप्राप्तं गतानुगतिकमनुसरति वा, तावत् समाजफलमुत्तममास्वदते; परन्तु स एव विपरीतं नेपथ्यं पश्यति शिक्षां शङ्कते वा विपरीतमेव नेपथ्यमुत्कृष्टं मनुते, तदा समाजोऽनुकरोति। ईदृश्येव स्थितिर्यदि सर्वत्र स्यात्, तर्हि आन्वीक्षिकीकौशलाभावेन कार्याकार्ये केनापि न ज्ञायेयाताम्। अतस्तद्विवेचनाय न्यायविद्या प्रवृत्ता। अनया प्राप्ततर्ककुशलः शङ्कापसारणे कार्यकारणतत्त्वविवेचने च सक्षमोऽकार्याद् व्यावर्तते। इदमेव प्रज्ञावैशारद्यम्।

## वाक्यवैशारद्यम्

तर्कविद्यया वाक्यवैशारद्यं कथमिति निरूप्यते। वाक्येन या प्रज्ञा भवति, सा बोधसंज्ञया व्यवह्रियते। बोधश्च सखण्डोपाधिविषयकः, अखण्डोपाधिविषयकश्च। यस्य विषयकं निर्वचनं न सम्भवति, सोऽखण्डोपाधिः। सति निर्वचने सखण्डोपाधिः निर्वचनसामर्थ्यं न्यायविद्यया उपलभ्यते। पदार्थस्वरूपनिर्वचनानन्तरमखण्डार्थविबोधे जाते तद्वान् वाग्मी बुद्धिमान् उच्यते। पदार्थनिर्वचनं विना अखण्डोपाधिज्ञाता न वाग्मी न वा कुशलः। कश्चन निर्वचनं जानाति, अखण्डार्थं तु न जानाति, स निकृष्टः, एतद्वैपरीत्ये मध्यमः, सखण्डाखण्डोभयज्ञाता उत्कृष्ट इत्येवंभेदेन लक्षणज्ञो निकृष्टः, लक्ष्यज्ञो मध्यमः उभयज्ञ उत्तमो भवति। तत्रोदाहरणं प्रकृतिप्रत्ययौ। यथा राममित्यत्र 'रामः' प्रकृतिः, 'अम्' प्रत्ययो वर्तते। अनयोः प्रकृतिः रामशब्दः सर्वासु भाषासु समानानुपूर्वीक एव। प्रत्ययस्तु तत्तद्भाषायां विभिन्नो भवति। तदर्थः कर्मत्वं यदा धनुर्वेषधारि रामाभिनयेन ज्ञापयितव्यं तदा विना न्यायविज्ञसम्मतपरिष्कृतिं आभिनयेन न ज्ञापयितुं शक्यम्। प्रत्ययं श्रुत्वा तत्तद्भाषाविद्भिस्तदर्थो यः कर्मत्वादिः ज्ञायते, स विरुद्धं सदपि अखण्डोपाधिः ज्ञेयः। अत्रोदाहरणं साहित्यिकानां रसप्रतीतिर्वेदान्तिनां वा ब्रह्मप्रतीतिः निर्विकल्पात्मिका। तावतैवालमिति विवक्षायां तु रसाभासोऽपि प्रसज्येत। तथा सति प्रज्ञाकौशलाभावे नेपथ्यमुत्कृष्टं ज्ञात्वा समाजो रसाभासमेव पन्थानमन्यं स्वीकुर्वाणः मार्गाद्भ्रष्टो भवितुमर्हति। तन्निराकरणमिव प्रत्ययार्थाभासनिराकरणं यदि चिकीर्ष्यते, तर्हि तत्साधनतया वाक्यवैशारद्यमपेक्ष्यते। तच्च व्युत्पत्तिरूपम्। सा च तत्तच्छब्दार्थस्य न्यायप्रणाल्यनुगता निरुक्तिः, सा चान्यूनानतिरिक्तार्थप्रत्यायिका चेद्विदुषां सन्तोषावहा भवति। एवंविधा निरुक्तिः असन्दिग्धार्थत्वाद् न्यायालयेन काम्यते। तदुक्तम्—

> सुलिप्यनयशब्दोक्तिः सम्पूर्णावयवाक्षरम्।
> शासनं राजदत्तं स्यात् सन्धिविग्रहलेखकैः॥ इति॥

प्रकृतमनुसरामः—द्वितीयार्थमखण्डं कर्मत्वं विषयीकृत्य जायमानो बोधो वैयाकरणसम्मतः। न्यायसम्मतस्तु परसमवेतत्वे सति धात्वर्थतावच्छेदकफलाश्रयत्व-विषयकः। यद्यपीदं निर्वचनं व्याकरणनिर्देशानुसारेण 'काशीं गच्छन् पथि मृतः' इति प्रयोगस्थले काश्यां निरुक्तकर्मत्वस्याभावेन अप्रमाणतां भजेत। अतोऽखण्डोपाधिकमेव कर्मत्वं ब्रुवते वैयाकरणाः। न ह्यत्रेष्टापत्तिर्वक्तुं शक्या, यतः लक्षणानुसारेण लक्ष्यत्वं न स्वीक्रियते मनीषिभिः। तथासति वैयाकरणमते काशीं गन्तुं कर्मत्वं काश्यामसदपि न तथाविधस्य प्रयोगस्याप्रामाण्यम्। तदेव प्रवृत्तस्य पथि मृतस्य व्यापारजन्यं न्यायविद्यया प्रवचनकुशलया परिष्कृतप्रणाल्या अखण्डार्थस्वरूपं वास्तविकं ज्ञायते। तावत्पर्यन्तमेव परिष्कारोपयुक्तत्वमिति श्रीधर्मदत्तझामहोदयैः पञ्चलक्षणीतत्त्वावलोके उक्तमस्ति। साहित्यविदोऽपि व्युत्पत्तिशक्तिभेदेन वाक्यवैशारद्य-प्रज्ञावैशारद्ये अभिदधति। तदाहुः—

आदौ शास्त्रान्धकारे पतित इव ततोऽभ्यासमार्गे चरिष्णुः<br>
पश्चाद्व्युत्पत्त्युत्पत्तिदेहल्युपग इव ततः शक्तिवाटी प्रविष्टः।<br>
नानाशब्दाख्यपुष्पावचयकरणतो वाग्वशीभूतविश्वः<br>
यत्प्रेमापाङ्गदृष्ट्या भवति कविवरो भारती सा पुनातु॥ इति।

प्रज्ञावाक्यवैशारद्याभ्यां क्रियावैशारद्यं व्याख्यातम्। अतः आन्वीक्षिकीविद्या-निष्ठप्रामाण्यनिरूपकत्वात्प्रदीपः, वाक्यानि, तदर्थाश्च परस्परं समन्वयार्थमाकांक्षो-त्थापनपुरःसरं साध्यसाधननिर्णायकानि भवितुमर्हन्तीतीयं सर्वेषां कर्मणामुपायः। व्यसने अभ्युदये च बुद्ध्यवस्थापकत्वाद् उपायः आश्रयः। सर्वधर्माधर्मविद्याप्रतिपाद्यं प्रति प्रवर्तकत्वाद्धेयं विद्याप्रतिपाद्यानामाश्रयः।

न्यायविदस्त्वेवमाहुः—द्रव्यगुणकर्मणामभिमतानभिमतोपायतापरिज्ञापनात् प्रदीपः। विद्याव्युत्पाद्यानां विषयं विधेयतया विशेष्यता वोपकारीति इत्युपायः सर्वकर्मणाम्। विद्यया प्रवर्तनायां कर्तव्यायां सहकारित्वात् सर्वधर्माणामाश्रय इति।

### अथर्ववेदस्य वैशिष्ट्यम्

ग्रन्थकर्ता सामवेदीति प्रथमं सामोक्तिः, तदाश्रयत्वात्तत ऋग्वेदस्ततो यजुर्वेद इति क्रमेण त्रय्यभिधानम्। अथर्वणो वेदविशेषणेन तस्य वेदत्वस्थापनाप्रयोजनं बोध्यम्। किञ्च, वेदान्तसापेक्षया अस्येदमेव महत्त्वं यत् तत्पारायणमात्रेण फलति।

### अथर्ववेदत्वम्

ऋगादिवेदानां तत्त्वेन यथा प्रसिद्धिः पुरुषकर्त्रस्मरणात् तथा अथर्वणस्यापि

अपौरुषेयत्वमेव। अयमपि वेदः शिष्टैः पूर्वपरम्परानुसारं पूज्यत इत्यस्य नास्ति वेदत्वविषये सन्दिग्धता। शेषं न्यायमञ्जर्यां द्रष्टव्यम्।

### इतिहासस्य न वेदत्वम्

अथर्ववेदवदितिहासोऽपि प्रसिद्धोऽस्ति इति मूलकृता तस्य वेदत्वमुक्तम्, तथापि वेदान्तरेषु सृष्टिकालादारभ्याद्ययावत् स्वसजातीयोच्चारणसापेक्षोच्चारकत्वमेव यथा प्रसिद्धं न तथेतिहासे, इति अकर्तृकत्वस्मरणदार्ढ्याभावाद् इतिहासो न वेदः।

### धर्मलक्षणम्

वेदस्य उपयुक्तता विशेषतया धर्मस्य बोधने अस्ति। यतस्तं विना अपरो ग्रन्थो नादृष्टमदृश्यं बोधयितुं शक्नोति। अतो मीमांसकैः "वेदान्तर्गतेन विधिना बोधितेष्टसाधनत्वम्" तल्लक्षणं प्रोक्तम्। एवञ्च यः कोऽपि अनुष्ठेयो व्यापारो यदि त्रय्या बोधितस्तर्हि स वैदिको धर्मः। अस्येदं न तात्पर्यं यद् वैदिक इति कृत्वा सर्वः सर्वैरनुष्ठेयः; किन्तु वंशपम्पराप्राप्तत्वमपि तत्र नियामकं शास्त्रकृतामभिमतं समास्ते। यथा याजनाध्यापनादि विप्रेणैव कर्तव्यं भवति, शस्त्राजीवादि क्षत्रेणैवेत्यादि वर्णाश्रमिणां कृते यथाऽयं नियमः, तथैव म्लेच्छादीनां कृतेऽपि इयं मर्यादा अस्ति। तत्र त्वयं विशेषो यद् नहि तेषु वर्णाश्रमिणां वर्णाश्रमाचारनियम इव नियमो मर्यादितः, 'म्लेच्छकल्पिता धर्माः' इत्याद्युक्तत्वात्। न च तेषां वेदबाह्यत्वं कथं सिद्धान्तितमिति शङ्क्यम्, वेदप्रामाण्यास्वीकारे तथोक्तत्वात्। म्लेच्छैर्यदि वेदानुयायित्वं स्वीकृत्य "वयं वर्तामहे" इत्युद्घुष्यते, तर्हि तद्धर्मोऽपि वैदिक एव, "धर्मो विश्वस्य जगतः प्रतिष्ठा" इत्युक्तत्वात्। वैदिके सिद्धान्ते स्वीकृते धर्मान्तरस्वीकारार्थं न बलात्कारप्रलोभनादिप्रसक्तिः, न वा धर्मत्यागस्य। एवं स्थिते समेषां भ्रातृभावोऽपि नासुलभः।

### धर्मस्य अनेकत्वाभावः

ये किल मन्वते 'धर्मा अनेके' इति, ते तु भ्रान्ता वेदं विहाय सर्वेषां मते स्वस्वसम्प्रदायप्रवर्तकाणामाचार्याणां तत्तत्सिद्धान्तानां वा सादित्वात्। यः सादिः तत्प्रतिपादयिता वा शब्दमनपेक्ष्य प्रवृत्तः, स स्वर्गसाधनत्वं कथमिव प्रत्यक्षानुमानाभ्यां विजानीयात्। यावदस्य समाधानं न, तावत् सादि निरूपितस्यार्थस्य धर्मत्वमपि सन्दिग्धमेव। सोऽयं दोषो वेदसिद्धान्ते नास्ति, अस्यानादित्वात्, गुरुपरम्पराया अपि अनादित्वाच्च। अतः सिद्धं वेदप्रोक्तत्वेन धर्मस्यानेकत्वाभावः, परम्पराप्राप्तत्वेन तु धर्माणामनेकत्वं तेषां तेषां कृते श्रेयस्साधनत्वं विवक्षितञ्चेदिष्टमेव विप्रादिधर्माणां स्वरूपतो भेदस्येष्टत्वात्।

## श्रुतेर्धर्मनिर्णायकत्वम्

ननु वेदस्य धर्मनिर्णायकत्वं केन न्यायेनोच्यते, इति चेच्छृणु। प्रतिव्यक्तिभेदेन बुद्धिवैचित्र्यात् केन किं कर्तव्यमिति निर्णये विनिगमनाविरहाद् व्यक्तीनां निर्णायकत्वं न भवति। तद्दोषनिरासाय अपौरुषेया श्रुतिः मध्यस्थवृत्तिः प्रमाणत्वेन सर्वैः स्वीकृता। यथा विधानपरिषदि सममतप्रसक्तौ विनिगमनाविरहेण सभापतिमतस्य नियामकत्वम् अङ्गीक्रियते, तथा वेदस्य।

किञ्च, वेदप्रामाण्यं स्वीकृत्य धर्मानुष्ठाने कृते आस्तिक्यभाववृद्ध्या सत्त्वगुणस्य लाभो भवति। निर्विकारित्वादनुष्ठातुः सत्त्वे समृद्धे प्रतिभाया वृद्धिः। ततो कर्तव्येषु दार्ढ्यम्। ततो विश्वासपात्रता इति वेदः प्रमाणत्वेन स्वीकृत एव। तदेवोक्तं मानसे —"वेद भव-वारिधि बोहित सरिसु" इति। एतेन आत्मतुष्टेः विकल्पातिरिक्तस्थले प्रामाण्यं प्रत्याख्यातं तोष्टृषु विनिगमनाविरहात्। दृष्टञ्चैतद् भाषान्दोलनप्रस्तावे—तत्तद्देशीय-भाषासु अन्यतमस्यां राष्ट्रभाषात्वस्वीकृतो विनिगमनाभावः। स एव न्यायो वेद-प्रोक्तत्वप्रामाण्ये अनुमन्तव्यः।

## म्लेच्छभाषायां संस्कृतत्वम्

किञ्च, त्रयीप्रोक्तत्वं म्लेच्छधर्मे भवति कथमिति उदाहरणेन उपमीयते। तथा हि संस्कृतभाषया यज्ञादिषु व्यवहर्तव्यत्वे सिद्धे संस्कृतभाषेतरभाषायामसाधुत्वात् तद्भाषया यज्ञादिषु प्रयोगो न कर्तव्यो भवतीति सिद्धेऽपि संस्कृतेतरभाषासु यदि व्याकरणमर्यादामनुसृत्य संस्कृतभाषासंस्कारो विधीयते, तर्हि संस्कृता-तिरिक्तभाषायाः साधुत्वं केन व्याहन्तुं शक्येत। यथा "यावत्तैलं तावद् व्याख्यानम्" इत्यत्र प्रयोगे 'व्याख्यानम्' इत्येकपदत्वे असाधुत्वं 'व्याख्यानम्' इति पदद्वयघटितत्वे साधुत्वम्, तथैव 'कैट्' इत्यादिषु 'कं' मूषकं तस्यैव 'अट् अटनं' यस्य स 'कॉट्' इति। इत्थञ्च आङ्गलभाषाया अपि व्याकरणसंस्काराभिव्यङ्ग्यं साधुत्वं यथा, तथा म्लेच्छधर्मविषये बोध्यम्।

## असाधारणधर्मानुष्ठानप्रयोजनम्

वेदेन विहितस्यासाधारणधर्मस्य प्रयोजनं नास्तीति केचिद् व्याचक्षते। तन्न। वेदेन वर्णाश्रमसमाजे वृत्तिनियमनं कृतं वर्तते। अन्यत्र तदभावेन वृत्तिसाङ्कर्यप्रसक्त्या एकार्थाभिनिवेशित्वप्रयुक्तस्य शत्रुभावस्य परस्परमपरिहार्यत्वात्। वृत्तिसाङ्कर्यादेव धर्मसाङ्कर्यात् कुलीनत्वमपि निर्दुष्टं वैदिकादन्यत्र नास्ति। वैदिकसमाजे तु कुलीनत्व-निर्णयो न दुरधिगमः। नापि चैकार्थाभिनिवेशप्रयुक्तं शत्रुत्वम्। न च तदलीकमिति वाच्यम्, अद्यापि वृत्तिनियमनव्यवस्थाया आश्रमधर्मव्यवस्थायाश्च त्रयीधर्ममाधारी-कृत्य धर्म्यत्वेन परिपालनदर्शनात्। यद्यपि वैदिकसमाजेऽपि साङ्कर्यं माभूदिति सत्यम्,

तथापि अद्यावधि तथाविधान्यपि कुलानि सन्ति अस्मिन् समाजे, येषु साङ्कर्य-दोषभावो निर्णेतुं शक्यते। तद् वक्ष्यते मूलकृता 'व्यवस्थितार्यमर्यादा' इति ग्रन्थेन पर्यन्ते अत्रैवाध्याये। अतोऽसाधारणधर्मानुष्ठानं सप्रयोजनमेव।

### एकस्यानुष्ठानस्य धर्मत्वमर्थत्वञ्च। साङ्कर्याभावः

वेदविहितत्वहेतुना अदृष्टेष्टसाधनत्वमनुमाय सञ्जाता प्रवृत्तिर्धर्मः। अर्थस्येष्टत्वे तु अर्थ इति भक्तिरसायने व्यवस्थितत्वाद् धर्मार्थयोः साङ्कर्येऽपि तत्त्वस्य पृथक्त्वाद् न हानिः। एवमेव कामविषयेऽपि ध्येयम्।

### धर्मस्योपकृतिः

वैदिकसमाजे स्थितान् वर्णान् स्वे स्वे धर्मे प्रेरयित्वा समाजव्यवस्थयोपयोगितया अपेक्षितानां गुणानां विकासः कुलेनेषु त्रय्या साधित इति टीकाकृता राजपुत्ररक्षणप्रकरण उक्तम्--

> आहारेष्वथ योनौ च बीजे कर्मणि चापि यः।
> शुचिः कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः॥ इति।

इयं त्रय्या उपकृतिरवश्यं स्मर्तव्या। अन्यत्र तु दयादिसाधारणधर्मा उपदिश्यन्ते अभिलष्यन्ते च; परं तत्र विवाहादिनियमनाभावात् स्त्रीणां दीर्घकालं सुरक्षास्थित्यसम्भवात् साङ्कर्यं दुर्निवारमेव, साङ्कर्यात् समाजे मात्स्यन्यायोऽपि अप्रतिहत एव, तथा कुलीनत्वाभावादपेक्षितानां संस्काराणां परम्परया अनुद्बोधनचिन्ताभावात् कुलीनत्वरक्षणाभावः। अत एव प्रतिज्ञातार्थनिर्वहणे अविश्वास्यत्वं चेति दोषा अपरिहार्या वर्तन्ते। इमे दोषास्तु त्रयीनिर्गडितवैदिकसमाजे न सन्ति। त्रय्या अपौरुषेयत्वात् वर्णाश्रमसमाजे पक्षपातस्य रागादिदोषस्य अप्रसक्तिः। अतः वर्णाश्रमसमाजस्य कृते शान्तिप्रतिष्ठापकत्वादयं त्रयीप्रोक्तो धर्म औपकारिकः। अथास्यौपकारिकत्वं प्रत्यभिज्ञायमानं कथं भवेदिति चिन्त्यते। तच्च ज्ञातं तदा भवति, यदा जीवः स्वस्थस्वरूपं ज्ञात्वा आकृष्टः स्वातन्त्र्यं कामयेत, इति जीवस्वरूपं संक्षिप्य विमृश्यते। स च मलत्रयेणावृतोऽपि ईशान्नातिरिक्तः। अनावृततादशायां तु ईशः शिवशक्तिभेदेन विभिन्न इव भाति। तयोः शिवो ज्ञानस्वरूपः, ज्ञानचिकीर्षाकृतिमत्वरूपमाश्रयत्वं शक्तिरुच्यते। तयोः प्रतीतिस्तु घटमहं जानामीति प्रयोगेण समुदेति। जानामोऽत्र धात्वर्थो ज्ञानम्, मिप्प्रत्ययार्थः आश्रयत्वम्, एतद् द्वयं शिवशक्त्यात्मकमेव। इदं तत्त्वद्वयं साहित्ये शुद्धविद्यापदेन व्यपदिश्यते। यतोऽत्र उभयत्रापि अनानन्दतापादकावरणेन सह परिमितप्रमातृताबुद्धेराणवमलस्य मम तवेत्याकारिकाया भेदधीतिरोधानमस्ति। किञ्चोभयत्रापि मायिकमलस्य पुण्यपापात्मकस्य कार्मिकमलस्य चासत्त्वादशुद्धत्वमपि सर्वथा नास्ति।

किञ्च, शिवशक्ती यदा परस्परं सङ्गच्छतः, तदा वस्तुमात्रसम्बन्धिना अभानापादकावरणेन असत्त्वापादकेनावरणेन च व्यावृतेन भवतः, इति कृत्वा तयोः सर्वं प्रत्यक्षम्। इयं शक्तिर्न जडा। अनयोस्तत्त्वयोः जीवे उच्छलनं यदा, तदा स जीवः कविः क्रान्तदर्शी च भवति। राज्ञाऽपि यदि स्वविनयमहिम्ना शिवशक्ती उपास्येते गुरुप्रसादेन, तर्ह्येवायं प्रजानुरागाद्यात्मकं कर्म कर्तुं प्रभवति। एवंस्थिते नृपस्य राजत्वमन्वर्थं भवति। तदेवं शक्तितत्त्वमनुध्याय नीतिलक्षणे प्रागुक्ते जयमङ्गलाकृता तस्या निवेशः कृतः। इमे यथा शुद्धे तथा सदाशिवेश्वरशुद्धविद्यातत्त्वान्यपि शुद्धान्युच्यन्ते। तत्र सदाशिवः अहंविशेष्यकः तादात्म्येन जगत्प्रकारको निर्णयो भवति। ईश्वरश्च जगद्विशेष्यकः तादात्म्येनाहंप्रकारको भवति। शुद्धविद्या तु भेदतिरोधानमुच्यते। इमानि तत्त्वानि शिवशक्तिविलक्षणानि, तेषु अनानन्दतापादकावरणस्य सत्त्वात्। उक्तपञ्चविधतत्त्वसाधारणधर्मस्तु अभानापादकावरणासत्त्वापादकावरणयोरभावो बोध्यः। एवञ्च पञ्चस्वपि शिवादिशुद्धविद्यान्तेषु भेदधीतिरोधानमेव शुद्धत्वं बोद्धव्यम्।

अथ शुद्धाशुद्धान्युच्यन्ते। मायाकालनियतिकलाविद्यारागपुरुषाः सप्त शुद्धाशुद्धा भवन्ति। तत्र माया भेदबुद्धिः अहं-त्वमित्याकारिका। अस्यां सत्यां अहन्ता-प्रमा आत्मनि परिच्छिन्नभावमापन्ना भवति। इयमेव परिमितप्रमातृता आणवमलपदेन व्यपदिश्यमाना भवति। सा जीवस्य आवरणम्। आवृतिभावमापन्नो जीवो बाल्याद्यवस्था अनुभवन् पूर्वोक्तादानन्दाद्वञ्चितः शक्तितत्त्वं तिरोधापयति, तथा बाल्याद्यवस्थानुभवेन कालतत्त्वमपि स्फुटीकरोति। एवंरीत्या मायाकालयोरावरणे जाते जीवो कयाचन रज्वाऽऽबद्धो भवति। सा च अदृष्ट-(नियति)अनतिरिक्ता, कार्यकारणभावरूपा वा कार्यकारणभावाख्यां नियतिमालोच्य स्वशक्त्यनुसारेण जीवः कार्यसम्पादकः कर्ता भवति। तदिदं कर्तृसमवेतं कर्तृत्वं कलापदेन बोध्यते। इदमपि आत्मन आवरकमेव। एतत्सत्त्वादेव जीवः "सर्वं पश्यामि" इति रीत्या न प्रतिजानाति इति सत्यम्, तथापि शुद्धाशुद्धात्मकमायाकालनियतिकलाभिः कञ्चुकितः जीवः सर्वंपश्यन्नपि सर्वमस्तीत्यनुभवति, कार्मणमलाभावेन असत्त्वापादकावरणाभावात्। एवंविधावस्थाचतुष्टयस्थितिः विद्यापदेन व्यवह्रियते। एवञ्च विद्यावृतो जीवः कार्मणमलाविशिष्टः आत्मनः कर्तृत्वं पश्यन् तेषु तेषु विषयेषु शरीरप्राप्तिपूर्ववासनाभ्यां वशाद् रज्यति। तदा तत्तत्सुखवासनावासितान्तःकरणः अनुरक्तो भवन् रागी उच्यते। इयमेव रागावस्था जीवस्य। मायादिरागान्तैः तत्त्वैः कञ्चुकितः सन्नपि जीव एव पृथक्तया पुरुषसंज्ञो व्यवह्रियते। एतदवस्थायां मायादि पुरुषान्तेषु सप्तसु कार्मणं मलं नास्तीति शुद्धत्वमभानापादकमावरणं त्वशुद्धम्, अशुद्धत्वमपीति शास्त्रमुपेक्ष्य रागेण, कामनया शास्त्रपरतन्त्रो वा आस्ते, जीवासाधारणी शुद्धाशुद्धत्वं भवति। यदाऽयं पुरुषः रागादितत्त्वपरतन्त्रो विद्यामुपेक्षते,

तदाऽयं कार्मणमलविशिष्टो भवति। तदानीमशुद्धं तत्त्वमुच्यते। तदानीं मन्त्रत्रय-विशिष्टानां सत्त्वरजस्तमसां साम्यावस्था प्रकृतिपदेन व्यपदिश्यते। सा सर्वस्य प्रकृति-पदेन व्यवह्रियमाणाऽपि ईशसमवेता चेत्, ज्ञानक्रियामायाभेदेन व्यवह्रियते। जीवे तु सत्त्वादिगुणपदेन व्यपदिश्यते। तत्रेशसमवेतं ज्ञानं जीवे भातं सत्त्वं भवति। क्रिया रजः, माया तमः, तदुक्तं प्रत्यभिज्ञादर्शने—

स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या।
माया तृतीये त एव पशोः सत्त्वं रजस्तमः॥ इति॥

इमां प्रकृतिं जडामाहुः। तथा चेदानीं शिव एव जडोऽभूद् इति निर्णीतम्। साम्यावस्थायां क्षोभे सति विषमतायां गुणत्रयमुच्यते। सा च अहं बहु स्यामित्याकारिका, प्रत्यभिज्ञादर्शने उपनिषत्सु च तथैव निरूपणात्। क्षोभोऽपि ईशेच्छैव। सत्त्वादिगुणा अपि विकृतिभावमापन्ना रूपनामक्रियाभेदेन उत्पद्यन्ते। तत्र रूपत्वं सोमसूर्याग्नित्रित-यत्वम्। नामत्वञ्च अकारोकारमकारभेदेन प्रणवत्वमेव। क्रियात्वन्तु रुद्रोपेन्द्रब्रह्मादि-भेदेन तत्तद्देवतान्यतमत्वमेव। तथा चानानन्दतापादकावरणेनावृतः शुद्धाशुद्धावस्था-भावमापन्नः मायादिरागान्तैः कञ्चुकितः पुरुषः तमोरूपां शक्तिं प्रकृतिमावरकत्वेन संगृह्णाति, तदा स एव पुरुषाख्यः जाग्रत्स्वप्नसुषुप्तिभेदेन विश्वतैजसप्राज्ञभेदेन च स्वनामसंज्ञां विधत्ते। एतेषु प्राज्ञस्वरूपमेवमुच्यते यद् निद्रासुखमेव तदिति। तथा हि जडात्मिका प्रकृतिः यदा पुरुषस्य सुखरूपतया भानविषयो भवति, तदा प्रकृतिरेव प्रधानमुच्यते। अत्रैव निर्विकल्पात्मिकावृत्तिरपिबोध्यते, तस्मान्निद्रासुखं प्रधानान्ना तिरिक्तम्, तत् प्रकृतिपुरुषयोर्व्याप्तम्। तदायं जीवः प्राज्ञोऽभूत्। निद्रायां प्रमातृत्व-स्यात्मसम्बन्धित्वादपूर्णत्वं न भाति। स्वप्नजाग्रदवस्थयोस्तु उक्तसुखभानाभावाद-सम्पूर्णत्वं मन्यते।

तैजसस्तु पुरुषः बुद्धिर्गर्वः ( अन्तःकरणं ) पृथिव्यादि पञ्चमहाभूतानि चेति समष्ट्यात्मको भवति। एतेषु कार्यकारणविवेकः शास्त्रोक्त्यनुसारेण यथायथं चिन्त्यः। एतेषां समष्टिः ऐक्यम्, स्वप्नावस्थायां तदेव विश्व उच्यते। यदा उक्त-समुदायात्मको व्यावहारिक एव पुरुषो भाति। इत्थं चोक्तेषु सप्तसु मिलितेषु तन्मयत्वेन भासमानः पुरुषः जीवो विश्वाख्यः पिण्डभेदेन भिन्नो भवति। अत एव स व्यष्टि-रुच्यते। तद् भेदकारणं कार्मणमलं रागेण कञ्चुकितः सन् प्रकृतिमात्मसात्कृत्वा जडश्च भूत्वा निषिद्धमाचरतीत्यन्यदेतत्। समष्टौ तु जीवो विराडुच्यते। जीवस्य व्यष्टेः आश्रयभूतं शरीरम्, तदुत्पत्तिश्च लोके प्रत्यक्षतो दृश्यते। अत्रेदं वक्तव्यं यत् शरीरपिण्डे व्यष्टौ जीवभावमापन्ने पुरुषे स्थिता शक्तिः गुणभावं गता शरीरारम्भके बीजे तिष्ठन्ती क्षेत्रज्ञसंज्ञया बुध्यते। तत्र सर्वेऽपि संस्कारा वर्तन्त एव। यदि अपेक्षितं

संस्कारमनुरुध्य शरीरारम्भकबीजस्य संस्कृतत्वमापाद्यते, तर्हि शरीरमपि तथैव भवितुमर्हतीति ।

शिव-शक्ति-सदाशिव-ईश्वर-शुद्धविद्या-माया-काल-नियति-राग-पुरुष-विद्या-कला-प्रकृति-बुद्धि-मनोऽहङ्कार- चक्षुः-श्रोत्र- त्वक्-रसन-नासिका- पाणि-पाद- पायूपस्थ- वाक्-आकाश-पृथ्वी-जल-तेजो-वायु-तत्सूक्ष्म-पृथिवी-जल-तेजो-वाय्वाकाश नामानि तत्त्वानि भवन्ति । एतेनैवेदं सिद्धं यद् जीवः विद्यारागादिना अवच्छिन्नात् पुरुषान्नापरः । यद्ययं शास्त्रोदितं नीतिसम्मतं कर्म गुरुभक्तिपुरःसरं मानमदौ वशीकृत्य तिष्ठति, तर्हि स पुनः परमशिवः स्वतन्त्रोऽपि भवितुमर्हति । तदर्थमेव वेदविद्याया अभ्युदयः । तदर्थमेवानया विद्यया साङ्कर्यदोषात् तत्प्रयुक्तकलहादिदोषाच्च समाजः संरक्षितः ।

किञ्च, शरीरे जालन्धरादिसंज्ञिका इडाप्रभृतयो नाड्योऽनेका भवन्ति । तासु अन्यतमया सुषुम्नया यदा वायुवेगवशाद् मूलाधारस्य वह्नेः शिखा ज्ञानरूपा उच्छलति, तदा नादो भाति । तच्छ्रवणे कुण्डलिनी जागृतिरुच्यते । तत्सत्त्वे ओजः हृदि अभिवर्धते । तच्च उक्तवह्निज्वलनं ज्ञानमेव । तदुक्तं चरके—

हृद्यं तत्स्याद्यदौजस्यं स्रोतसां सम्प्रसाधनम् ।
तत्तद्यत्नेन संसेव्यं प्रशमो ज्ञानमेव च ॥ इति ॥

ओजोवर्धकत्वेन चरके ज्ञानमुक्तं तथापि कार्ये कारणोपचाराद् ओज एवात्र ज्ञानमुक्तं बोद्धव्यम् । इदमेवौजः मातृपितृशरीरात् प्राप्तं शरीरान्तरवर्ति शिरोमार्गेण ध्यानद्वारापि तत्र तत्र प्रसारयितुं शक्यत इत्यपि सिद्धमेव । यदि च तज्ज्ञानं प्रमाणप्रमेययोर्बाधितत्वे अप्रामाण्यज्ञानास्कन्दितं स्यात्, तर्हि तस्यास्थिरत्वमभिनिवेशानात्मकत्वं चार्थत एव प्राप्तं स्यात्, अतः प्रत्यक्षादिप्रमाणत्रयेण प्रमितत्वे तु तस्य बाधः बृहस्पतिनापि कर्तुमशक्यः, इति प्रमाणत्रयेण प्रमितोऽर्थः अबाधितः, तद्विषयकं ज्ञानं ओजोरूपमपि तथैवेति । तस्मात् सचेतस्केन जीवेन भारतीया राजनीतिरेवावलम्बनीया । अत्र प्रमाणसम्बन्धाप्रयुक्ताविसंवादेन सन्तोषविदग्धव्यवहारौ च नियतौ । भारतीयनीत्युत्प्रेक्षणे आंजसः न्यूनत्वं तेन मूलाधारस्थवह्निज्वालानादः श्रोत्रागोचरोऽभूत् । तेन च रोगा अपि अभिवृद्धाः । प्रशमोऽपि व्यपगतः । अतः स्वस्वातन्त्र्यप्राप्तये जीवेन ओजसः संरक्षणाय नीतौ प्रमाणत्रयं स्वीकृतम् । तेषु अपौरुषेयत्वेनासन्दिग्धार्थकत्वादनभिशङ्क्यत्वात् लोकयात्रायाः सुचारुत्वदर्शनात् त्रयीधर्मः स्वीकृतः ।

## त्रयीप्रोक्तधर्मविषये दृष्टशास्त्राणि संवादीनि

अथ दृष्टफलानि शास्त्राणि पाश्चात्यानां वचनानि च शास्त्रोक्तधर्मविषये संवादीनि सन्ति न वेति विमृश्यते ।

वात्स्यायनेन कामसूत्रे शास्त्रस्यानभिशङ्क्यत्वादित्यादिना धर्मशास्त्रस्य प्रामाण्यं स्वीकृतम्। तत्र वर्णाश्रमाचारस्थितेः लोकयात्रोपयोगित्वमधिकृत्य प्रत्याख्यानं कुर्वन्ति केचित्, तत्तु न सम्यक्।

## वर्णाश्रमस्य लोकयात्रोपयोगित्वम्

अर्थं प्रधानं मन्वाना लोका उन्नतिं प्रति धर्मस्य बाधकत्वं जानाना अर्थमेवार्जयितुं प्रयतन्ते। अर्जिते च तस्मिन् मनोरथपूर्तिं वैदग्ध्यं सन्तोषञ्च प्राप्तुं समीहन्ते; किन्तु इतिहासो न कोऽपि तथाविधः, येन अर्थस्यार्जयिता मनोरथसन्तोष-वैदग्ध्यानि प्राददिति वक्तुं शक्यते। किं बहुना, अर्थोपलब्धिसमकालमेव कामाङ्कु-राणां बाहुल्यात् कार्यपूर्तिनिमित्ता मनोरथपूर्तिरभूदिति बुद्धिर्नोदेति; अपि तु अर्थप्रधानाः तृष्णादासभूताः धर्ममुपेक्ष्य जीवितेच्छवः विनाशं प्राप्ता इति शास्त्रविरुद्ध-वृत्तीनां राज्ञामितिहासो वर्णितः चाणक्येनैव। क्वचित्तु अर्थार्थी न्यायसीमानमतिक्रम्य अर्थमपहरति, परान् वञ्चयति, स सर्वोऽपि जनः सर्वस्य शङ्कापात्रं भवति। शङ्कायां जागरूकायां भेदोऽपि समाजे नियतः। भेदे उदिते स्वस्य पराजयदोषोऽपि स्मर्तव्यः। अतो दुर्नयपरिहाराय धर्मप्राधान्यमुररीकर्तव्यम्। तदर्थं त्रयी उपदेशार्थमपेक्ष्यते। अपि च धर्मशौचाभावे अपस्मारकुष्ठोन्मादानां सञ्चारो दोषः, वातव्याधेः शीतलायाः प्रकोपः जनपदक्षय इत्याद्यायुर्वेदोक्तो दोषोऽप्यनुसन्धेयः। एवंरीत्या आयुर्वेदमतं धर्मसाफल्यविषये संवादि भवति। पाश्चात्त्यानां संवादविषये इदमेवालं यत् श्रीपियाट-महोदयेन सिद्धान्तस्थैर्याभावात् पाश्चात्यदेशस्य सत्प्रतिपक्षितया अतीव शोचनीया-वस्थोत्तरोत्तरमभिवर्धिष्णुर्दृश्यत इति सप्रपञ्चं विस्तरेण प्रमाणपुरस्सरं व्याख्यातम्। तदग्रे चिन्तितमस्ति। लोकयात्राविधायकवर्णाश्रमसमाजविघटनेन सत्त्वगुणस्य ह्रासात् चरकोक्तलक्षणलक्षिताः सत्त्वसारा अदर्शनं प्राप्ताः कथायामेव स्थिता इति क्रियातन्तुविकृतेरपसारणं कामनावशाद् रक्षणञ्च धर्मस्य त्रयीप्रोक्तस्यान्यत्फलम्। यद्यपि केचिद् धर्मपालने भारं मन्वते, तथापि शास्त्रकर्तृणां मतेन भारतीयानां धर्मपालनं प्रकृतिः, सा विशेषतया मर्यादातिक्रमणाद्धनलोभात् कामजक्रोधजव्यसनि-त्वाद्वा विकृत्या सुप्तप्राया। अत एवास्य समाजस्य ह्रासः। अत्रोदाहरणं शरीरम्, तद्धि मिथ्याहारविहाराभ्यां जीवेन रोगभूयिष्ठं क्रियते, न तु वस्तुगत्या तद्गुणम्। तथैव समाजस्यास्य प्रकृतिविषये बोध्यम्। अतो भारतीयैः स्वीयां प्रकृतिमालोच्य समाजान्तर-प्रवृत्त्यनुगमनं दोषत्वेन मन्तव्यम्, "क्रिया हि द्रव्यं विनयति नाद्रव्यम्" इत्युक्तत्वात्। भारतीया एव इमां वर्णाश्रमस्थितिं ज्ञातुमनुष्ठातुं च पारयन्ति। भारतीयं शास्त्रमपि वर्णाश्रमिणां कृत एवोपस्थितं वर्तते। तच्च वर्णाश्रमिणां विकृतिमपसारयितुं प्रवृत्तम्, न तु धर्मप्रकृतिमुत्पादयितुम्, तस्यास्तत्र स्वत एव सत्त्वात्, अत एवास्य न विसंवादित्वमपि सर्वथा कामादिविकृतयः सर्वथा अपसारणीयाः जीवशरीरादिति तु अयुक्तं वचः, यतः

युक्त्या सेविताः कामादयः सुखाय भवन्ति। ते तथाविधा वर्णाश्रमधर्म एवान्तर्भाव्यन्त इति। सत्यप्येवं कामादिसेवने औचित्यानौचित्यसीमादि केनचिन्निर्धारणीयः। स च रसायनसधर्मालोकस्यानामिषभूतः आरोग्याधायकः सर्वज्ञमन्तरा केन निर्वक्तुं शक्य इति शास्त्रं त्रय्यात्मकमेवैतद्विषये शरणम्। अस्य शरणस्य समादरे तु कामादिस्सेवाफलमैहिकं सुखमेव न; किन्तु निरतिशयस्य तस्यानावृतस्यानुभवोऽपि।

अन्यच्च त्रयीधर्मस्य महानुपकारोऽपरोऽपि वर्तते यद् अनेकेषु सत्स्वपि तानुपजीवयन् अयं धर्म सर्वानेकसूत्रे निबध्नाति। पुनः स्वस्वसम्प्रदायरक्षणार्थं स्वीयसिद्धान्तं दृढीकुर्वन्त इमे उपासकाः स्वीयामिष्टदेवतां चिन्तयन्तो मतिभेदं प्रख्यापयन्तोऽपि नैतिके कर्तव्ये वैदिकमेव पन्थानमुररीकुर्वन्ति। तद्यथा—भारतीयनीतिशास्त्रस्य मूलरचयिता वैदिको विप्रः, तट्टीकाव्याख्यातारो वैदिका जैना बौद्धा एकामेव सरणिं विदधति, वर्णाश्रमधर्मं त्रयीप्रोक्तं स्थापयितुं चेष्टन्ते। एतेनैव एतत्समाजे अन्तःसत्प्रतिपक्षितत्वाभावः साधितः। तदुक्तम्—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्॥ इति।

अपि च वैदिकेषु कथमेकवाक्यतेति उदाह्रियते। वचनविरोधपरिहाराय केनचिद् विदुषा प्रशस्तवचननिर्णयाय एकः न्यायः सञ्चारितः, तथा हि तत्र न्यायाभासमुद्भाव्य वचनार्थनिर्णयाय एको न्याय प्रदर्शयति, तर्हि तस्यैव पारिषद्यं सर्वैः विद्वद्भिरौचित्यादनाभासादनुमन्यते। अत्र "औदुंबरीं स्पृष्ट्वोद्गायेत्" इत्यादिवाक्यमुदाहरणं स्मर्तव्यम्। तस्माद् भारते मतभेदबहुलोऽपि देशे शास्त्रस्य निर्णायकत्वात् सम्पूर्णसम्प्रदायानां मतैक्यमेव नीत्यनुष्ठाने। इति।

## भारतीयसंस्कृतेर्वैशिष्ट्यम्

ननु वर्तमानसमये अन्यस्याः संस्कृतेः तदुपासकेषु ओजसश्च उन्नतिर्दृश्यते, एवंस्थिते भारतीयसंस्कृतेः किं वैशिष्ट्यमिति विमृश्यते। जन्मान्तरगतानां संस्काराणामुद्बोधः धृतिः प्रतिभा एतेषां स्वाभाविकी स्थितिश्च एतत्संस्कृतेः फलम्। एतत्फलसत्त्वादेवेयं संस्कृतिः संस्कृत्यन्तरापेक्षयापि अतिप्राचीना इतरसंस्कृतिभिराक्रम्यमाणापि आत्मानं रक्षन्ती समाजं वर्णाश्रमीयं भूषयति। देशान्तरस्थितास्तु हिटलरबाधिकप्रभृतिसंस्कृतयः उदिता स्तमिता अभूवन्। क्वचिद् भारतीयसंस्कृत्युपासका यदा न्यूनसंख्याः, तदा इयं संस्कृतिः ह्रासं प्राप्तेव भवति। एवमेव शङ्काभिराक्रान्तत्वाच्चेयं भारतीयेन समाजेन प्राचुर्यतया नोपास्यते। तथापि 'इयं विनष्टा' इति न वक्तुं शक्यते। यदि विवेकद्वारा तर्कसाहाय्येन शङ्काया निरसनं भविता, विपद्ग्रस्तायां वा जिज्ञासा, तदा सुषुप्तिं गताया इव अस्या अभ्युदयः समृद्धो भविष्यत्येव।

अभूच्चैवमेव। एवंरीत्या दूर्वाङ्कुरबीजमिव एतत्संस्कृतिबीजं भारते क्षीणावस्थायामपि तिष्ठत्येव। तत्र विवेकजलसेचने समृद्धिः, तदभावे संस्कृतेः प्राचुर्येण अदर्शनं च वेदादारभ्य कुलीनत्वस्य सुव्यवस्थितरीत्या संरक्षणेन अभूदिति निर्णीयते। इदं च गर्भाधान एव तथाविधसंस्काराणां व्यवस्थापनासुशकम्। शुद्धमातापित्रोः यादृशं तेजः बलमुन्नतत्वं तादृशमेव विशुद्धमातापितृजन्ये बालके गर्भत एव भवति इति सिद्धान्तो मूलकृतापि राजपुत्ररक्षणप्रकरणे स्वीकृत.। इयं शुद्धिः जातिप्रधान-संस्थायामेव। दृष्टञ्चैतत् तत्तज्जातीयेषु बालकानामम्लरसादिभक्षणरुचौ। अभिनवगुप्त-पादाचार्यैर्जातीनां तत्तत्संस्कारकारणत्वं तथा गीतायां "स्वभावप्रभवैर्गुणै"रित्यादौ निरुक्तम्। इदमेव जातिमर्यादया स्थितस्य भारतीयसंस्कृतिमतः कुलीनत्वप्रयुक्तं साभिनिवेशं विनयस्थापनं भारतीयसंस्कृतेः वैशिष्टयम्।

अपि च अस्या अपरं वैशिष्टयं यद् एककुलीनं प्रति अपरस्य कुलीनस्य असूया-लुत्वाभावः। तत्रोदाहरणं भीष्मार्जुनादीनां चरित्रं वर्तते। भारतयुद्धे भीष्मः कृष्ण-सहितं अर्जुनरथं बाणप्रहारेण पश्चात्पदं प्रत्यावर्तितवान् तदा कृष्णः शशंसेति। यद्यपि याचितमण्डनन्यायेन कुलीनान्तरेष्वपि संस्कारा आधातुं शक्यन्ते। तथापि तत्र महान् परिश्रमः फलसन्देहश्च, तावदवधिरक्षणदौस्थ्यम् विपदि आपतितायां प्रतिज्ञातार्थानिर्वह-णात्मको व्यभिचारश्चेति दोषाः स्मर्तव्याः। किञ्च, प्रतिभोद्बोधः भारतीयसंस्कृते-र्वैशिष्टयमप्यत्र चिन्त्यम्। अन्यथा जातिसाङ्कर्ये पूर्णतया सम्पन्ने परस्परसत्प्रतिपक्षि-तत्वेन राज्यसञ्चालनायापेक्षितानां संस्काराणां विलयनम्, ततः स्मृतिविलोपः, ततो मतेर-भावः, ततश्च कर्तव्यविस्मरणम्, ततः स्वातन्त्र्यापगमः तत्सत्त्वे मदमानौ वर्धेते। ततो धृतेरभावः। अत एव गुरुभक्तेरभावः, ततो जनापरागः। एवंविधदोषवैपरीत्ये हेतुः प्रतिभोद्बोधो भारतीयसंस्कृतेर्वैशिष्टयम्। श्रीमद्भागवतेऽपि इदमेवोक्तम्—यः गुरु-देवतोपासको भवति, तस्माद् भयं निवर्तते, कुलीनेषु धृतिभक्त्योरुदयादिति।

"तं गुरुशिष्ये"ति सूत्रे गौतमेन अनसूयुभिरिति विशेषणनिक्षेपेण कुलीनत्वस्य सात्त्विकप्रतिभोद्बोधकारणत्वं सूचितं तदप्युपपन्नं भवति। एवं सत्येव शास्त्राध्ययनं सार्थकमुच्यते। यतः तच्छास्त्राध्ययनेनाध्येतुर्हृदि गूढोऽर्थ उक्तः स्वयं स्फुरति। तदुक्तम्—

अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च।
यत्कृपालेशमात्रेण नमोऽस्तु गुरवे सदा॥ इति।

तदेतत् कुलीनानां विद्योपासकानां कृते स्वल्पश्रमसाध्यम्। सत्यप्येवं येषु कुलीनेषु न प्रतिभा तत्र हेतुः सरस्वत्युपासनाया अपेक्षिताया अभावो ज्ञेयः। किञ्च, भारतीयसंस्कृत्युपासकेषु कुलीनेषु इदमपि वैशिष्ट्यं यद् गुरुभक्त्या कुलीनाः धर्मतत्त्व-विषये यथा यथा प्रतिभां प्राप्नुवन्ति, तथा तथा विद्याशमसन्तोषसुखमनुभवन्ति।

अर्थमानुषङ्गिकं पश्यन्ति। स्वकर्तव्येष्वेव रमन्त इति। कुलीनत्वाभावे अर्थं प्रधानं पुरुषार्थं मन्यमाना रौद्ररसे स्थिताः न कथमपि शमसन्तोषमनुभवितुं पारयन्ति। नापि च स्वातन्त्र्यसुखम्। यतो रौद्रे तर्कमतिभावौ न स्तः। एवंस्थिते रौद्राः सेवा-वृत्ति कुर्वन्तः स्वीयं स्वातन्त्र्यं विस्मरेयुरेव इति कुलीनत्वं स्वतन्त्ररुचये भारतीये संस्कृतावया नीत्याऽनुमोदितम्।

## कुलीनेषु जाड्यकारणपरिहारः

यत्र किल वर्णाश्रमसमाजे कुलीनेषु जाड्यं दृश्यते, तत्र कारणं दुर्जनसंसर्ग इति तत्संसर्गो यथा न भवेत्, तथा प्रयत्नोऽपेक्ष्यते, संस्कारस्तु तत्र साहजिक एवात्रो-दाहरणं सिंहः।

नाभिषेको न संस्कारो सिंहस्य क्रियते वने।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता॥ इति।

गजः सिंहं दृष्ट्वा बलवान् सन्नपि तस्माद् बिभेति सत्त्वशून्यत्वाद् अधृतिमत्वा-ज्जाड्यताया उद्बोधाच्च। सिंहोऽङ्कागतं शशं विना न मृगयां भुङ्क्ते। गजं दृष्ट्वा धृतिमान् सः करिणं हन्त्येव। एवमेव अकुलीना गृहस्थाः संसारे प्रियमप्रियञ्चानुभवन्तः जडा भूत्वा पारतन्त्र्यमेव स्वीकुर्वन्तो वर्तन्ते। स्वातन्त्र्यसंस्कारोऽपि सर्वथाऽनुद्बुद्धः तेषु, इति दोषापसारणं कुलीनेषु कर्त्तव्यं महता प्रयत्नेन। तच्च राजपुत्ररक्षणप्रकरणे व्यक्तमेव।

वर्तमानसमये कुलीनस्य योगक्षेमौ विना भृतिं कथं भवितारौ? इति प्रश्नः अवश्यं समाधेयः। तत्रोत्तरमिदमेव—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योमक्षेमं वहाम्यहम्॥ इति।

मनुनापि जीविकाप्रकरणे सन्तोष एव ब्राह्मणानां कृत उक्तः—

न लोकवृत्तं वर्तेत वृत्तिहेतोः कथञ्चन।
अजिह्मामशठां शुद्धां जीवेद् ब्राह्मणजीविकाम्।
सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्॥ इत्यादि।

कुलीनैः शौचाशौचे उपेक्षिते ईश्वरे च अविश्वास्यत्वमनुभूतमत एव लोकदृष्ट्या कुलीना अविश्वास्या अभूवन्। तदुक्तम्—

अविश्वासो हि जन्मभूमिरलक्ष्म्याः। इति हृदयम्।

## जातेरस्तित्वम्

अथ अवान्तरवर्णाश्रमसमाजे अवान्तरजातेरस्तित्त्वं प्रत्यक्षेण कथं प्रमाणीक्रियताम् ? इति चेदेवम्। यथा रत्नादिवृत्तिजातिः अकुशलैर्न प्रत्यभिज्ञायते तद्विशेषज्ञैर्दृश्यैव, तथैव ब्राह्मणत्वादिजातीनां प्रत्यक्षविषये बोध्यम्। अकुशलाः पश्यन्ति न जातिम्, तदर्थमायुर्वेदोक्तं जातिसाधकमुच्यते।

स्तनन्धयस्य कुमारस्य नेत्ररोगे समुद्भूते तच्चिकित्सा स्तन्येन कर्तव्या भवति। सा च सजातीयस्तन्य एव सफला भवति। अन्यथा रोगो वर्धते, मृतिर्वा भवतीति हेतुना बालस्य हिताय मातुरभावे सजातीयस्तन्यं विहितं तद् जातेरस्तित्त्वे नियामकं सुश्रुतादौ स्पष्टम्। आधुनिकपद्धतावपि मातुः स्तन्यालाभे धात्र्याः स्तन्यस्य साजात्यमनुमोद्यत एव। अतः प्रत्यक्षसिद्धां जातिमनुरुध्य वर्णाश्रमधर्मो विहितो नानुचितः। अत्रेदमप्यवधेयम्—यत् स्वापेक्षयाऽर्थदृष्ट्या वेश्यानां ऋद्धिर्वर्धत इति दृष्ट्वा पतिव्रतया पातिव्रत्यं न त्यज्यते, तथा भारतीयैर्वर्णाश्रमिभिरवर्णाश्रमाणामभिवृद्धिं दृष्ट्वा न स्वधर्म उपेक्षणीयः। तदुक्तं मनुना—

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥ इति।

अकुलीनानामयं स्वभाव एव यत् ते कुलीनाः प्रलोभेन स्वधर्माच्च्यावयन्ते। तत्र सावधानता अपेक्षिता।

## धर्मेणैव पालनम्

धर्मं विना पालनमसम्भवि। कथम् ? इति चेत्। पालनस्वरूपे अवगते प्रश्नोऽयं समाहितो भवति। "पारस्परिकविश्वास्यतापूर्वकं बाधानिरासपूर्वकं च स्वमर्यादामनतिक्रम्य संरक्षणं पालनम्, तस्मिन् यथावत् सम्पन्ने जनो विश्वसिति। स च विश्वासः अर्थरुचिषु नास्ति" इति कौ० अ० आबलीयसाधिकरणात् स्फुटम्। अतो राजनीतिः धर्मविजयिनं द्रष्टुं कामयते। तथा सत्येव परस्परं विश्वासस्य स्थायिन उत्पत्तेः। अत एव—

न मे स्तेनो जनपदे न कदर्यो न मद्यपः।
नानाहिताग्निर्नायज्वा न स्वैरी स्वैरिणी कुतः॥

इत्युक्तं धर्मस्य अनुशासकपदे स्थितत्वे सर्वमुपपन्नं भवति। धर्मोऽपि वेदोदितं मर्यादामनुसृत्यैव पालनीयो भवति।

## धर्मसंवरणं तु न कर्तव्यम्

केचिद् बृहस्पतिमतानुयायिनः धर्मसंवरणेन आत्मानं धार्मिकं ख्यापयन्ति, तथापि समाजे साङ्कर्यमवरोद्धुं ते न शक्नुवन्ति। तद्दोषः प्रागुक्त एव। यद्यपि सङ्कर-

जातिषु क्लेशसहत्वं शौर्यादिसम्पत्तिर्वा दृश्यते, तथापि सत्यवसरे 'प्रकृतिस्त्वां नियोक्ष्यति' इति निर्देशाद् विपत्तौ संव्यवहारकाले चाधर्मविजयी न तथेति अविश्वास्यत्वान्न स गृहीतः। अतः पारस्परिकविश्वास्यत्वसम्पादनाय संरक्षणहेतुं धर्मं विना उपायान्तरं नास्तीति स्मृत्वा धर्मसंवरणं न कर्तव्यम्।

### धर्मः वेदसम्प्रदायगत एव

धर्मोऽपि वेदतदनुयायिस्मृत्यादिविहित एव आदरणीयोऽनुष्ठेयश्च, अदृष्टद्वारककार्यकारणभावस्य अपौरुषेयशब्दप्रमाणातिरिक्तैः प्रमाणैर्ज्ञातुमशक्यत्वात्। नानेन कस्यापि धर्मस्य विलोपप्रसक्तिः, तत्तदधिकारिभेदेन तत्तद्धर्मस्य विहितत्वात्। शेषं प्राग् आवेदितमेव।

### आभिमानिकसुखसत्त्वे क्लेशसहिष्णुत्वादयः

किञ्च, नीतिविदा कुलीनेन क्लेशसहिष्णुता-सात्त्विकताऽनुरागादयो गुणा अभिलष्यन्ते। तत्र कारणं कुलीनानां तथाऽभिमानविशेषः, तस्य स्वरूपं न्यायपरिशुद्धौ वैशेषिकभाष्ये नीतिवाक्यामृते निरूपितं वर्तते। तदाभिमानिकं सुखं संवरणशीलेषु अकुलीनेषु वा कदापि नोत्पत्तुमर्हति, तेषु तथाविधसंस्काराभावात्। आभिमानिकसुखादेव क्षत्रियः ऐहिकं सुखमुपेक्ष्य महतोत्साहेन असिधाराव्रतमनुतिष्ठति, सुखञ्चानुभवति, न श्राम्यति। युद्धस्थलात् परावर्तने मानहानिं च मनुते। सेयं परम्परा कुलप्रधानायां भारतीयसंस्कृतौ वर्तते। यादृशः असिधाराव्रतादौ आभिमानिकसुखानुभवोऽत्र सुलभः, न तथेतरसंस्कृतौ। तदाहुः—

> सत्त्वात्मनाममलधर्मविशेषजन्मा जन्मान्तरानुभाववासनयाऽवतीर्णः।
> सत्त्वात्मसम्पदुदयातिशयैकहेतुर्जागर्ति कोऽपि हृदि मानमयो विकारः॥ इति।

### लाभं विना अभिमानवतां धर्मे प्रवृत्त्युपपत्तिः

ननु वैदिके कर्मणि मर्यादिते ऐहिकसुखालाभेऽपि परलोकं कल्पयित्वैव भूयमाना प्रवृत्तिः कथमुपपन्ना भवतीति चेदुच्यते। तथाविधां प्रवृत्तिं प्रति धर्मवतां शमसहकृतः अभिमानो हेतुरुक्तः। एवंविधोऽभिमानो यस्य तस्य चित्तसन्तोषशमवैराग्याणि उदियन्ति। तदाभिमानी विषयतृष्णाया अभावाद् दुःखिनां परित्राणाय सुखिनामनुमोदनाय च प्रयतते। शौचमपि एतदर्थमेव विहितम्। इदमेव स्थायिजुगुप्सायाः कार्यम्। स्थायिजुगुप्साया अभावे तु विषयान्निवृत्तिर्दुर्लभैव। किञ्च, यस्य एतादृशी जुगुप्सा नास्ति, स कथमिव आत्मानं गोपयेत्? प्रतिज्ञां नातिक्रामेत्? सुहृदो न तिरस्कुर्यात्? गुरुजनेभ्यो दीनेभ्यो वा दद्यात्? तृणाय मन्येत वा जगत्? स्त्रियं वा न गच्छेत्? किं न हिंस्यात्? इत्यादि। अतः चित्तसन्तोषाय स्थैर्यार्थञ्च शमो वैराग्यापरपर्यायः अपेक्ष्यते। तत्सत्त्व एव शुद्धप्रतिभया व्यवहारो विदग्धः, आदर्शस्वरूपश्च

भवति। अयं मतिभावस्यानुभवो येनानुभूयते, स चित्तसन्तोषेण सह आभिमानिकं सुखमपि अनुभवति, अकार्यान्निवर्तते च। इति शमोऽपेक्षितः। यद्यपि चित्तसन्तोष-कारणत्वेन धृतिविभावेषु मनोरथपूर्तिरपि उक्ता, तथापि सा धर्मावलम्बनमन्तरा न सम्भवति। तदुक्तम्—

पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते ॥ इति।

अतोऽर्थविषये जुगुप्सा आवश्यकी। सत्यां तस्यामपि पुनः वेदाज्ञया जुगुप्सि-तोऽप्यर्थः भोग्यत्वेन स्वीक्रियते भोगाय। एवंरीत्या अर्थसञ्चये प्रवृत्तोऽपि सः प्रजामा-त्मानं राज्यं वा रक्षति। यदि सन्तोष उपेक्ष्येत, तर्हि तु मदमानयोः प्रसक्त्या अविनये पर्यवसानं स्यात्। तदुक्तम्—

मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता।
अतिमूढ उदस्यते नयान् नयहीनादपरज्यते जनः ॥ इति।

अतः शुचित्वमेव साधनं तथासत्येव विदग्धव्यवहारसमानाधिकरणसन्तोषः। तदेतत् श्रद्धालक्ष्मीधृतितुष्टिपुष्टयादि त्रयोदशधर्मपत्नीनां तत्पुत्राणां कामदर्पधृतिसन्तोष-विनयनियमादीनां च धर्मेण सह सम्वन्धे ज्ञाते धर्मनिवासः कुत्रेति स्पष्टं भवति। लक्ष्मीसहस्रनामसु राजनीतिप्रमाऽपि एकं नाम महालक्ष्म्या वर्तते। अतो वेदोदिते शुचिधर्मे स्थित्वा चित्तसन्तोषात्मिकायां धृतौ आत्मनः स्थितिः सम्पादनीया। तथा च सर्वत्र प्रमाणपुरस्सरं प्रमितार्थविषये तर्कमतिभावानां विनयप्रभृत्याचाराणां च प्रसरणात् सर्वं सुस्थम्। एवं सति प्रसादोऽपि गीतोक्तः सम्पद्यते। प्रसादे दुःखहानिः, इत्युक्तमपि साधु मन्तव्यम्। प्रसादश्च हर्षादनतिरिक्तः। एतदालम्बने अतिदूरं स्थिता अपि लोकस्य प्रीतिविषया भवन्ति। अनेन हेतुना चित्तसन्तोषधृतिसम्पन्नो राजा रञ्जयितुं समर्थो भवतीति मत्वा कामन्दकेन राज्यस्य मूलं सत्त्वमुक्तम्। तत्स्वरूपमुक्तं भावप्रकाशने—

आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचः
मेधाबुद्धिधृतिक्षमाश्च करुणा ज्ञानञ्च निर्दम्भता।
कर्मानिन्दितमस्पृहा च विनयो धर्मः सदैवादराद्
एते सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः ॥ इति।

अतस्तर्कप्रचुरया विद्यया आस्तिक्यादेः प्रचारणमेव कर्तव्यम्। तेन इहलोके उक्तरीत्या कीर्तौ स्थापितायां सत्यां परलोके अमृतप्राप्तिरपि नासुलभा।

### सृष्ट्यारम्भे आद्ये ब्राह्मणत्वम्

इत्थञ्च वेदमर्यादायां स्वीकृतायां तदनुसारेण विप्रत्वादिजातिरपि मन्तव्यैव। अथ मातापितृजन्यायां व्यक्तौ ब्राह्मणत्वसम्भवेऽपि सृष्ट्यारम्भे प्रथमव्यक्तौ ब्राह्मणत्वं

कथम् ? इति प्रश्नः जातेश्चातुर्विध्यस्वीकारेण समाहितो भवति। तद्यथा–एका वंशपरम्परा प्राप्ता, द्वितीया सृष्ट्यारम्भे आद्यब्राह्मणे, तृतीया योगतपस्यापूते शरीरे, चतुर्थी आतुलोम्येन कृता विवाहात् पञ्चमे सप्तमेऽपि वा वंशे। अत्र सृष्ट्यारम्भे भगवानीश्वर आद्यव्यक्तौ तत्तज्जातिनिर्णायकः, विश्वामित्रादिभिः तपस्याक्लेशं सोढ्वा क्षत्रियारम्भकान् अवयवान् अपसार्य ब्राह्मणशरीरारम्भकान् अवयवान् संयोज्य सम्पन्ने शरीरे ब्राह्मणत्वादिजातिः साधिता इति कौशिके ब्राह्मणत्वं नानुपपन्नम्।

### नीतौ जात्या सह गुणानामप्युपयुक्तता

अत्रेदं स्मर्तव्यम्—यथा कदलीदलं जात्या तथात्ववदपि शुष्कं नीरसत्वात् त्याज्यं भवति, तथा ब्राह्मणादिः जात्या सन्नपि वृत्तादिहीनश्चेद् नीतिकार्ये अयुक्त एव! विवाहे भोजनादौ भूयस्यादिसामान्यदक्षिणादानादौ वा जातेरुपयुक्तता स्मर्तव्या। शुद्धसन्तत्यै प्रतिग्रहादि नियतार्थार्जनादौ च उपयुक्तत्वेन तस्या विहितत्वात् सा न व्यर्थेति ध्येयम्। एतेन—

> जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च।
> एभिर्युक्तो हि यस्तिष्ठेद् नित्यं स द्विज उच्यते॥

इत्याग्नेयोक्तं सङ्गच्छते।

### वर्णं प्रति वृत्तस्याकारणत्वप्रतिषेधः

यत्र किल "न योनिः नापि संस्कारः वृत्तमेव तु कारणम्" इत्यादौ ब्राह्मणत्वादि जातिमन्तं प्रति वृत्तमेव कारणमित्युच्यते, तत्र यादृशस्थलविशेषे ईश्वरकृतमर्यादानुसारेण दग्धवेत्रबीजात् कदलीकाण्डोत्पत्तिरिव एकस्मिन् एव जन्मनि जात्यन्तरपरिणामः प्रकृत्यापूरादिति योगसूत्रानुसारेण विश्वामित्रे ब्राह्मण्यस्योत्पत्तिः, तस्याः तथात्वपरीक्षासाक्षिणो वसिष्ठसदृशस्य वचनात्कर्तव्या वर्तते। तत्रैव वृत्तस्य कारणत्वं बोध्यम्, "जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा" इत्यत्र।

### अनुलोम एव जात्युत्कर्षः

अत्रेदं स्मर्तव्यम्—धर्मशास्त्रेण "ब्राह्मणात् शूद्रायां जातः इत्येवमनुलोमक्रमेण समुत्पन्ने वंशे चतुर्थे पञ्चमे वा विप्रत्वं भवति नान्यथा" इत्युक्त्या अश्रेयसीत्वं निमित्तमुक्तम्, न पुंसन्ततिपरम्परायाः। तदिदं कलिवर्ज्यं पशुसन्ततिसाधारणकार्यकारणभावलाघवानुरोधेन व्यवस्थापितमित्यन्यदेतत्।

### ब्राह्मण एव जात्युत्कर्षः

'त्र्यहेण शूद्रो भवति ब्राह्मणः' इत्यादौ विप्रः शूद्रसदृशो भवति इत्येवार्थो विज्ञेयः, ब्राह्मणत्वादिजातेर्नित्यत्वात्, सदृशत्वार्थं एवंविधस्य प्रयोगस्य "श्येनेनाभिचरन् यजेत" इत्यादौ क्लृप्तत्वाच्च।

### कौशिकादौ संस्काराभावेऽपि विप्रत्वम्

नन्वेवं कौशिको यदि विप्रोऽभूत्, तर्हि तस्योपनयनाभावे पातित्वं कथं न मन्तव्यमिति चेत्, न, उपनयनाधिकारितावच्छेदकं स्वजातीयमातापितृजे विप्रे स्वीक्रियत इति खण्डदेवाचार्यप्रभृतीनां सिद्धान्तस्मरणात्। जन्मौषधितपःसमाधिजा सिद्धिः, तथाविधेषु कौशिकादिकेषु तन्नाभ्युपगम्यते। न च उपनयनाभावे वसिष्ठे पुरोहितत्वमनुपपन्नमिति वाच्यम्, ब्राह्मणशरीरोद्भूतस्य वसिष्ठस्य पौरोहित्यकर्तृत्वस्वीकारात्। एवमेव 'अब्राह्मणाद् अध्ययनमापत्काले विधीयते' इति वचनन्यायेन विश्वामित्रादेरध्यापकत्वोपपत्तिः, अत एव "गोधर्मं सौरभेयात् शुश्राव" इति महाभारतवचनमुपपन्नं भवति।

### वसिष्ठादीनां जीवत्वं मुक्तत्वञ्च

क्वचित् पुत्रशोकाक्रान्तत्वं वसिष्ठादीनां वर्ण्यते, तत्तु 'पश्वादिभिश्चाविशेषात्' इत्युक्त्या जीवत्वाद् बोध्यम्। शास्त्रेण निर्णीतत्वान्मुक्तत्वमपि तेषु स्वीक्रियते।

### सन्दिग्धे गुणो ब्राह्मणत्वनिर्णायकः

यत्तु जाबालस्य विप्रत्वं तस्यार्जवेण साधितं तदुपपत्त्यभावादयुक्तमिति। तन्न। तत्र गोत्रत्वमेव आस्ते सन्दिग्धम्। ब्राह्मणमातापितृजन्यत्वं त्वसन्दिग्धमेव। स्वीयपुत्रे ब्राह्मणमातापितृजन्यत्वसन्देहकथनमत्यन्तमयुक्तिकम्। तथोक्तं "परिचरन्ती यौवने त्वामलभे" इति। इत्थं च पत्युः पतिचरणरतत्वात्स्वगोत्रज्ञानं न सम्भवितुमर्हति। "नैतद् ब्राह्मणो विवेक्तुमर्हति" इत्युपसंहारस्य शमदमादिसम्पत्तेः ब्राह्मण्यपरिचायिकाया मूलस्य आर्जवस्यामानित्वसहकृतस्याभावे एवं विनयो नोपपद्यत इत्येतावन्मात्र एव तात्पर्यात्। तेन सत्यवचनस्य निर्णेयत्वं भवति।

### कलौ आर्जवाभावेन जातिनिर्णयाभावः

अत्रेदमवधेयम्—नातिमानित्वसमानाधिकरणमार्जवं युगान्तर एवासीदिति कलौ तदाश्रयणं जातिसाधकतया न युक्तमिति।

### ब्राह्मणादिविभागस्यापरित्याज्यत्वं

यद्यपि आत्मगुणवत एव ब्रह्मसायुज्यम्, न जन्ममात्रेणेति ब्राह्मणादिविभागाभावेऽपि आत्मगुणवतां परलोकप्राप्तिर्भवेदेवेति तत्रैव प्रयास उचित इति भाति। तथाप्यष्टसु आत्मगुणेषु शौचस्यापि ग्रहणात्, तस्य च वेदैकवेद्यत्वाद् वेदेन तथा परिग्रहाद् ब्राह्मणादिधर्माः शौचे अन्तर्भूता भवन्ति। अत आत्मगुणवद्भिरपि वैदिको धर्मोऽपि परिपाल्य एव, अनेनाश्रमधर्मोऽपि व्याख्यातः।

## पुराणमते ब्राह्मणत्वादिव्यवस्था

ननु 'सन्त्यक्तव्याः प्रसिद्धा ये जातिभेदविधायिनः' इत्यादिवचनैः विप्रत्वादिकं निषिद्धमिति चेत्, न, स्पष्टलिङ्गकैर्वचनैः ब्राह्मण्यं जन्मना अस्तीति सिद्धत्वाद् जाति-निषेधकवचनानां तत्खण्डने अतात्पर्यात्। यथा "अपशवो वा अन्ये गो-अश्वेभ्यः पशवो गो-अश्वा" इत्यादौ गवाश्वातिरिक्ते पशुत्वं निषिद्धं तदप्रशस्तपशुपरतया समन्वीयते, तथा गुणहीनसमवेतं ब्राह्मणत्वादि निषिद्ध्यते। अत्रासञ्जातविरोधो न्याय उक्तसन्देह-निरासकः स्मर्तव्यः, गुणहीनजातिप्राशस्त्याभावे प्रकरणस्य तात्पर्यात्।

## ब्राह्मणादीनां वर्णपदवाच्यता

ननु वर्णशब्दो गुणादिषु रूढः। विप्रे वर्णपदबोध्यता कथं सङ्गच्छत इति चेदुच्यते। युगान्तरे विप्रादिषु तत्तद्वर्णसत्त्वेऽपि वर्तमानसमये जातिब्राह्मणादिषु तथा-विधरूपदर्शनाभावेऽपि च "ब्रह्मणे ब्राह्मणमालभेत' इत्यादिश्रुतौ पुरुषमेधे उपयुक्तेषु अनेकेषु विप्रादयश्चत्वार एव विप्रक्षत्रियवैश्यशूद्राः पुरुषसूक्ते उपवर्णिता इति जाति-मत्सु वर्णपदस्य रूढिः सिद्धा, 'अथैतान् ब्रह्माभिष्टौति सहस्रशीर्षेत्यनुवाकेन' इति भाष्योक्तेः। एवञ्च जातिपरतया 'वर्णनाद् वर्णः' इति योगस्योपपत्तौ कृतयुगादौ ब्राह्मणा-दीनां शुक्लं स्वरूपम् आसीदिति इतिहासमात्रेण कविसमयसिद्धत्वाद्वा विप्रादिपदानां शुक्लरूपादिशक्तिमत्त्वपरतया वर्णनस्य अयुक्तत्वम्।

## ब्राह्मणपदबोध्यता

अत्रायं निष्कर्षः—वृत्त्या गौण्या व्यञ्जनया वा ब्राह्मणपदबोध्यं बहुविधं भवति। तत्र शक्त्या बोध्यं विप्रत्वमुक्तं चतुर्विधान्यतममेव। ब्राह्मणकार्यकारितया गौण्या वृत्त्या विप्रपदबोध्यं ब्राह्मणगुणकर्मसकूटं भवति। व्यञ्जनया बोध्यं तु गौरत्वादिकम्। यथा नदीनां सरोजवत्ता, चन्दने पुष्पाभाव इत्यादि। यथा वा—

पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम्।
तदादाय करैरिन्दुः लिम्पतीव दिगङ्गनाः॥ इति च॥

तत्तु आदर्शरूपेण कविना वर्ण्यते। वेदविधौ वैयञ्जनिकबोधस्याग्रहणाद् वर्णपद-वाक्यतावच्छेदिका जातिरेव।

## गुणकर्मनिबन्धना जातिः

नन्वेवमपि पूर्वयुग एक एव वर्ण आसीदिति वर्ण्यते, तत्कथमुपपद्यते? इति चेदभिधीयते। पूर्वमीमांसामतानुसारेण 'न कदाचिदनीदृशं जगत्' इति यदा राद्धा-न्तोऽस्ति, तदा एकस्य वर्णस्यावसर एव बीजाङ्कुरवद् नास्ति। एतन्मते सृष्टिप्रलयोप-वर्णनमेकवर्णोपवर्णनं वा स्तावकतया अर्थवादो बोध्यः। उत्तरमीमांसकमते सृष्टि-प्रलयस्वीकारेण एकवर्णोऽपि सङ्कल्पादिमहिम्ना वर्णचतुष्टये परिणतो भवितुमर्हति,

यथा अहल्यायाः शिलात्वम्। एवंविधः सङ्कल्पसिद्धो योगी साम्प्रतं कोऽस्ति? इति निर्णेतुं न शक्यते। एवञ्च एकस्मिन्नेव जन्मनि मातृपित्रनपेक्षं ब्राह्मणत्वमस्माभिर्निर्णेतुं न शक्यम्, अतो जन्मकृता जातिव्यवस्था स्वीकर्तव्या अस्माभिरज्ञजनैः।

### ब्राह्मणादिषु तपस्विनां वैशिष्ट्यम्

वसिष्ठादि ब्राह्मणानां स्वाभाविको नयः शौचादि सम्पत्तिरिति वर्ण्यते; किन्तु तेऽपि क्रोधादिविकृतिभावमापन्नाः दृश्यन्ते, तथा सति ब्राह्मणान्तरापेक्षया किं वैशिष्ट्यमिति। चेत्तत्रैवमाहुः—

"स्वाध्यायस्तेषां देवत्वं क्रोधस्तेषां नृणामिव" इत्युक्तत्वाद् विप्राणां स्वाध्यायस्तपो वा देवत्वमस्ति। तपस्विषु तदिदं तप इति तपो नित्यः पौरुशिष्टिः इत्यादिवाक्यैः अतिशयिततरमस्ति। क्रोधादिमत्त्वमपि तेषु कञ्चन अपराधिनं प्रति दण्डार्थमुपयुज्यते। इत्थञ्च दण्डारम्भकत्वादयं क्रोधो नापराधः। क्वचित्तु मोहप्रयुक्तः। तथापि ते क्रोधं परिहृत्य तपस्वितां स्वाध्यायशीलतां स्वायत्तीकर्तुं पुनः प्रायतन्त इत्यनेकैरितिहासैर्निर्णीयते। इत्यलं प्रसक्तानुप्रसक्तपरम्परया। इदन्तु सिद्धं यदमानित्वादिसहकृतप्रतिभादिगुणसम्पत्तेः सहजतो लाभाय धर्मशास्त्रानुमोदिताया जातेरस्तित्वं स्वीकृत्य कौटिल्येनापि धर्मस्थापनाय त्रयीविभाग उक्तः, सोऽवश्यमादर्तव्यः। अन्यथा तु लोको न प्रसीदेत्; अपि तु विषीदेदेव।

### कुलीनत्वप्रयोजकम्

कुलीनत्वं मातापितृप्रयुक्तं किं वा तत्सहितजातिप्रयुक्तमिति प्रश्नेऽयं सिद्धान्तः— यद् मातृपितृशुचित्वेन सह जातीयता कुलीनत्वस्य प्रयोजिका इति। तदेतत्स्मृत्वैव भारतीयराजनीत्या विद्याप्रतिष्ठाकामनया जातिगौरवं स्थापितम्।

### वृत्तिनियमनेन शूद्राणां सम्पत्तितोऽवञ्चनम्

मनुना शूद्रा याजनादिवृत्तितो बहिष्क्रियन्ते तेन तत्प्रयुक्तार्जनापहारेण ते सम्पत्तिभोगाद्वञ्चिताः स्युरिति चेत्, न, शास्त्रेण सर्वेऽपि वर्णा वृत्तिव्यवस्थायाः सुचारुत्वाय नियमिताः, धनार्जनात्तु केऽपि न वञ्चिताः। यतः शूद्रैः यद् धनं सेवावृत्त्या अर्जनीयम्। तदेव याजनादिभिर्विप्रैः। एतद्वृत्तिनियमनयोः यदि तुलनां पश्यामः, तर्हि शास्त्रस्य पक्षपातो धनार्जने कुत्रेति नीतिसारटीकाकृदुक्तेन स्फुटीभवति। एतन्मते जनानुरागप्रभवा हि सम्पदः, अनुरागो हि सेवाधीनः। शूद्रस्य सेवावृत्तिः। अतस्तस्मिन् अनुरागः सहजतः समाजस्य यथा, न तथेतरवर्णेषु विप्रादीनां वृत्तौ सेवाया अदर्शनात्। अतः अनुरागमूला सम्पद्धारा शूद्रं वाञ्छति। सत्यप्येवं तेषु व्यसनप्राधान्याद् दारिद्र्यमेवालोक्यते, अतो वृत्तिनियमनप्रयुक्तं न दारिद्र्यं किन्तु व्यसनित्वप्रयुक्तम्।

## वर्णान्तरेण शूद्रवृत्तिस्वीकारे तस्य दण्डयता

यद्यपि शूद्रस्य वृत्तिः विप्रादिभिः स्वीक्रियते, शास्त्रञ्च तत्र न दण्डं व्यवस्थापयतीति सत्यम्, तथाऽप्यत्रेदमेव स्मर्तव्यं यद् विप्रादिर्वर्णो यदाप्रभृति शूद्रादिवृत्तिं भजन्नास्ते, तदाप्रभृति लोकदृष्ट्याऽयं क्रमशो द्वेष्य एव भवति। इदं दण्डयत्वं लोकसिद्धं ज्ञात्वा शास्त्रेण विप्रादिरुपेक्षितः। अत एव विपदाद्यवसरे द्वेष्यत्वादिस्थितौ विप्रादिना सेवावृत्तिः त्यक्तव्यैव। तथा सत्येव स विश्व-विश्वास्यो भविता। सेयमापत्तिर्न सेवावृत्त्यधिकृतेषु शूद्रेषु।

अपि च कामन्दकेन 'विशुद्धाच्च प्रतिग्रह' इति विदधता शूद्रेतरोऽपि भारतीयराजनीतिमाश्रित्य दण्डितः। तथा हि—लोकसङ्ग्रहेषु दानं वृत्तं विहितं वर्णाश्रम व्यवस्थापनानन्तरम्। तच्च शासकेन कर्तव्यमेव। यदि च शास्ता उन्मत्ततां गतः, तर्हि तथाविधाद्राज्ञः धनं न प्रतिगृह्यते, तर्हि राजा लोकसङ्ग्राहकाद्दानाख्यकर्मणो वञ्चितो भवति इत्येवमूह्यमन्यत्रापि।

किञ्च, शास्त्रेण विप्रादिरपि दण्डित एव। तत्रोदाहरणम्—ब्राह्मणेषु कुण्डगोलकौ याजनादिषड्विधकर्मभ्यो हापितौ। तथाविधो दण्डः शूद्रेषु नास्ति। यत्तु सम्मानितं विप्रं पश्यन्तः केचिद् असूयालवः आक्षिपन्ति, तत्तु न मनोरमम्। जनताया उपकारकं कर्म कुर्वन् विप्रः शास्त्रेण सम्मानितः। नयतः स जनेषु प्रसृताया जडताया निवारणं विद्यामभ्यस्य प्रचार्य च करोति। तथा सत्येव तस्य देवत्वं तत्प्रयुक्तमेव तस्य सम्माननम्, तस्य पारिश्रमिकं नाक्षेपार्हम्।

## वृत्तिनियमनम्

अपि च भारतीयराजनीत्या वृत्तिनियमनं विधाय सर्वे जनाः साकाङ्क्षाः कारिताः। तद्बलेन सर्वे सङ्घटिताः सारल्येन भवन्ति, साकाङ्क्षयोः संयोगस्य स्वयं सिद्धत्वात्। तथात्वादेव च कलहोऽपि समाजे नास्ति।

इदं नियमनमपि कुलपरम्परामादृत्य। तेन कुलनत्वप्रयुक्तप्रतिभोद्बोधोऽपि नासुलभः। यदि कलहस्तेषु सम्भवेत्, तर्हि साकाङ्क्षत्वात् तन्निरासोऽपि सहजतः सुलभः। अत एव राज्ये अभ्यर्हिता मन्त्रशक्तिः, प्रभुशक्तिः, उत्साहशक्तिरपि विभज्य समाजे स्थापिता युक्तियुक्ता भवति। इमाः शक्तयः स्वतन्त्राः सत्योऽसमर्था भवन्ति, सापेक्षत्वे तु तासां कार्यकारित्वं नियतम्। इदं तत्त्वं समादृत्य राजसभायां सर्वेऽपि वर्णाः सदस्यत्वेन नियोजिता भवन्ति। एतेन बान्धवत्वमपि समुपार्जितं भवति। इति वृत्तिनियमनमुपयुक्तम्।

## क्षत्रियोऽध्यापनवृत्त्या हापितः

शास्त्रेणैतत्समाजे क्षत्रियाणां कृते अध्यापनं न विहितं तत्रापि हेतुः क्षत्रियस्य युद्धस्वभावः। युद्धरतः क्षत्रिय ओजोगुम्फे सम्भाषणशीलः टकारादिवर्णानुच्चारयन्

परुषवाग्भवति, क्रूरश्च। क्वचित्तु स मधुरवागपि हृदा कठोर एव। अत एव युद्धे क्षत्रियप्रायत्वं सैन्यस्योक्तम्। विप्रप्रायत्वाभावे कारणं कौटिल्येनोक्तं तेषां दयालुत्वं स्मर्तव्यम्। यत्र च दारुणकर्मणि विप्रस्य प्रवृत्तिस्तत्र वेदाज्ञैव हेतुर्मन्तव्या। विप्रस्य सत्त्वप्रधानता, क्षत्रस्य तु सत्त्वोपसर्जनरजःप्रधानता इत्यादि गीताटीकायामुक्तं प्रमाणं वेदितव्यम्। अयमेव न्यायो वैश्यादिविषये बोध्यः। उपर्युक्तं कर्मभेदमालोच्य विप्रादीनामुपनयनसंस्कारोऽपि कालभेदेन व्यवस्थापितः। तद्यथा—अहिंसाशीलत्वाद् गर्भाष्टमे विप्रस्य, एकादशे क्षत्रियस्य, वैश्यस्य द्वादशे इति। अत्रापि कारणमहिंसाहिंसाऽनृताशीलत्वानि।

### क्षत्रियस्यापि अध्यापने प्रवृत्तिः

सत्यप्येवं विप्रस्य अध्यापयितुरभावे आपदि क्षत्रियोऽपि अध्यापयितुं शक्नोति। तत्र प्रमाणं मनूक्तं वेदितव्यम्—

स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम्।
विविधानि च शिल्पानि समादेयानि सर्वतः॥ इति।
अब्राह्मणादध्ययनमापत्काले विधीयते ॥ इति च।

अत एव कुलीनस्यालाभे शूद्रोऽपि राज्यकर्मणि नियुक्तः शास्त्रकृता। तद्यथा—

अपारे यो भवेत्पारम् अप्लवे यो भवेत्प्लवः।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति॥ इति।

इत्थञ्च कुलीनस्य विप्रस्यालाभे तदितरो वर्णोऽप्यध्यापयितुं शक्नोतीति न विरोधः, नापि च वृत्तिवैषम्यप्रयुक्तोऽर्थार्जनाधिकाराभावः।

### कुलीनत्वस्य उपयोगान्तरम्

किञ्च, प्रतिभोद्बोध इव धर्मश्रद्धाऽपि कुलीनत्वस्य द्वितीयं फलम्। सा यस्य नास्ति, स न अपेक्षितफलभाग् भवति। अत एवोक्तम्—

शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते॥ इति।

सुप्रजाजननं फलमाधुनिकानामभ्यर्हितं कुलीनत्वे सति भवति। तच्छास्त्रेण साध्यते। दृष्टञ्चैतद् गवादीनां धान्यादीनामुत्पत्तौ। अत्रेदं चिन्त्यम्—कुलीनत्वस्य माहात्म्यं वर्णयन्त्या राजनीत्या अत्रैव राज्यशासनसञ्चालनपर्याप्तिर्न मन्यते; अपि तु गुणसमूहसमानाधिकरणे कुलीनत्वे।

### अकुलीनेषु प्रतिभोद्बोधः

अकुलीना मनुव्यासादयः कथं प्रतिभासम्पन्ना बभूवुरिति चेदुच्यते। व्यासादयः जन्मतः शुद्धाः शास्त्रप्रणेतारो बभूवुरिति तेषामुच्चकुलीनत्वाभावेऽपि न क्षतिः। कलौ

तु सा सिद्धिर्विलीना । अत्र तु दृष्टप्रयोगानुसारेण शिष्टं कुलीनत्वम्, तदपि भारतीयैः यदि उपेक्ष्यते, तर्हि अहङ्कारप्रादुर्भावात्, तर्कशक्तेरनुद्गमे साहित्यिकपद्धत्या रसमयेन अध्ययनेन माहस्यापि प्रादुर्भावात् शक्तिह्रास एव स्यात्। अतः सत्त्वं रक्षणीयं कुलीनत्वरक्षणपुरःसरम् । पञ्चसहस्रवर्षात् पूर्वं भारते समस्ता विद्या आसन्निति कृष्णस्याध्ययनेतिहासतः स्फुटं भवति । अधुना सा स्थितिर्नास्ति । तथापि 'अर्थी समर्थो विद्वानधिक्रियते' इत्युक्त्यनुसारेण प्रयतितव्यमस्माभिः ।

## धर्मस्य स्वरूपम्

केचित्तु धर्मोऽपूर्वमिति वदन्ति। धर्मः क्रियेति अपरे। ईशप्रसाद एव स इत्यन्य आहुः । एतेषु केचिन्मते 'धर्मः क्षरति कीर्तनात्' इति पद्यस्य समन्वयः । अपरमते क्रियानुष्ठानसमये अपि 'धार्मिकोऽयम्' इति व्यवहारस्य संवादित्वम्। ईशप्रसादस्य तथात्वे तु विधिनिषेधपरिपालने सति ईश्वरः प्रसन्नो भवति । तदुक्तम्—

यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः ।
तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ इति ।

इदमेव मतं राजनीतिविदां सम्मतम्। अस्यागमप्रमाणैकवेद्यत्वे धर्मत्वम्, प्रमाणत्रयवेद्यत्वे नीतित्वमित्यास्तां विस्तरः ।

## नीतौ सम्मानः

अत्र समाजे धर्मवृत्तिव्यवस्थापनमुखेन कुलीनत्वरक्षायै भोजनविवाहौ नियमितौ । तावता नीतिकार्येषु पदानुरूपं सम्मानने सर्वेषां न समानता भारतीयनीताविति न मन्तव्यम् ।

## हिन्दुधर्मे उन्नतिः सर्वाङ्गीणा

इत्येतदनालोच्य डॉ० श्री अम्बेडकरमहोदयैः—'उन्नतिर्हिन्दुधर्मे नास्ति' इति बुद्ध्या बौद्धधर्मोऽवलम्बित इति कैश्चिदाक्षिप्यते, तदत्र प्रस्तूयते ।

उन्नतिपदार्थे एतन्मतेऽर्थकामसमृद्धिः, अत्र तु धर्मस्यापि, एतयोर्मतयोः कुत्र प्राशस्त्यम् ? इति चेदत्रैवेति ब्रूमः । तथा हि—

नवीनानां मतेन यद्यपि कामस्योन्नतिः काम्यते, तथापि कामस्य अर्थसाध्यत्वाद् अर्थोन्नतिरेवात्र साधीयसीति वक्तव्यम्। एवंविधा समुन्नतिः धर्मप्रधाने राज्ये यथा, तथा नान्यत्र। यतो भारतसमाजे राज्यशासनविभागान्यतमेषु तत्तत्कार्याध्यक्षपदेषु तत्तज्जातीया एव नियोज्यन्ते, तेषामायुक्तादिका अपि तत्तज्जातीया एव क्रियन्ते, ततः तत्तत्कर्मप्राप्तधनवितरणमपि तत्रैव ( विशेषस्तु तृतीयाध्याये, शान्ति का अग्रदूते च द्रष्टव्यः) । एवंविधं नियमनं धनवितरणञ्च अन्यत्र नास्ति । प्रत्युत वृत्तिसाङ्कर्यप्रयुक्तमपनयबाहुल्यमेव पश्यामः, यथावद् धनवितरणव्यवस्थायास्तत्राऽदर्शनात् ।

## मतनिर्वाचनम्

एतत्प्रसङ्गाद् भारतीयराजनीतौ उक्तं मतनिर्वाचनमुच्यते। अत्र जातिनिर्वाचनं विद्वन्मतनिर्वाचनं संवासिमतनिर्वाचनमिति भेदेन त्रिविधं निर्वाचनमुक्तम्। एतद्रीत्या स्वर्णकार्याध्यक्षः तज्जातीयनिर्वाचितः तत्कार्यकरणे मन्त्रित्वेनाभिलष्यते। तस्येदं फलं यत्—तदाध्यक्ष्ये सुवर्णकारैर्निर्मितादलङ्कारात् स्वर्णापहारे कार्यकर्तुर्वेतनात्क्षतिपूर्तिः कर्तव्या भवति। तदशक्यत्वे स्वर्णाध्यक्षवेतनतः क्षतिपूर्तिः कर्तव्या। तदशक्यत्वे निर्वाचकजातितः सा कर्तव्या भवति। एवं च सजातीयेषु दण्ड्येषु सत्सु तज्जातीयात्तं प्रमादिनमध्यक्षं स्वसजातीया बहिष्कारादिदण्डैर्दण्डितो भवति, एतद्भिया पदाधिष्ठाने स्थितः स अकार्यान्निवृत्तः अवग्रही भूत्वा स्वकार्ये प्रवृत्तो भवति जातिमतनिर्वाचनेन। अतः सम्पद्यमानमिव दण्डप्रणयनं राजा नान्यया रीत्या कर्तुं शक्नोति, प्रजाकोपादिप्रसक्तेः। तदुक्तम्—

स्वजनेभ्यो विजानीयात् कुलं स्थानमवग्रहम्॥ इति।

विद्वन्मतेन विद्याप्रतिभाप्रागल्भ्यान्यमात्यस्य परिचीयन्ते। संवासिमतेन अस्तब्धता अचापल्यं सत्त्वं शीलं बलञ्च परीक्ष्यन्ते। पुनः विपदि अनुरागः धृतिः स्थैर्यञ्च लक्ष्यते। संव्यवहारतः विषादाभावममन्दप्रभावं क्लेशसहिष्णुतां प्रत्यक्षतः सप्रियत्वं भद्रतां च जानाति राजा इत्यलम्। तथा चास्मिन् धर्मे समृद्धिरर्थस्य नास्तीति केन कथं विज्ञेयम्।

## कृषिपाशुपाल्ययोः पौर्वापर्यम्

वृत्तिं विचारयता मूलकृता कृष्यनन्तरं पशुपालनं विहितम्, एतत्क्रमं विहाय नीतिसारकृता पशुपालनानन्तरं कृषिः कथं परिगणितेति चेत्, न, कामन्दकेन वैश्येन पशुपालनं कर्तव्यम्, मनुवचनानुसारेण आदौ विहितं तन्मतेन वैश्ये तद् धर्मवत्त्वं पशुपालनप्रतिभूत्वं च व्यञ्जितम्। मूलकृता तु कृषिप्रधानं भारतमनुसन्धाय कृषेः प्राथम्यमुक्तम्।

वाणिज्याया असमस्योक्तिः, कृषिपाशुपाल्ये इति तु समस्य, अत्र कोऽभिप्रायः? इति चेदुच्यते। वाणिज्यायां कर्तव्यायां तत्र लाभः शास्त्रकृद्भिः मर्यादितः। कृष्यां तु अमर्यादितो लाभः, तथा पशुपालनेऽपि इति बोधनार्थं वाणिज्योक्तिः असमासेन कृता।

## उपनयनाभावेऽपि वैश्यजातेः सुरक्षितत्वम्

उपनयनादिसंस्कारलोपेन वैश्येषु वैश्यत्वजातिः स्वीकर्तुमुचिता न वेति प्रश्ने इदं समाधानम्—

उपनयनं वेदाध्ययनं च धर्मौ वैश्यानाम्; परं तद्वृत्तौ तयोरङ्गत्वं नास्ति। विप्रस्य तु वृत्तौ तयोरङ्गत्वमभिधीयते। अत उपनयने असञ्जातेऽपि वार्तावृत्तिर्वैश्येषु नियता न पातित्वापादिकेति वैश्यत्वं न व्याहन्ति। न वा वर्णसाङ्कर्यं तेषु प्रवृत्तमिति

कुलशुद्ध्या वैश्यत्वजातिपरिहारकल्पने युक्तिर्नास्ति। प्रत्युत तै. स्वीयं कर्म अनुष्ठीयत इति वैश्याः कलावपि वर्तन्त एव। तेषां व्रात्यत्वं सम्पन्नं संस्काराभावादिति तु अन्यदेतत्। ब्राह्मणानां कृते तु उपनयनमावश्यकमेव, अन्यथा तेषु प्रतिग्रहदानाद्यनधिकार उक्तः शास्त्रेषु। अतो ब्राह्मणपरम्परायामुपनयनमनुस्यूतं वर्तत इति यथा दाढ्र्येन वक्तुं शक्यते, न तथा वर्णान्तरेषु युक्त्यभावात्। अतो ब्राह्मणैः कृष्यादिकर्मकर्तृभिः स्वकर्महानेन स्वीयं विप्रत्वं हापितं साङ्कर्यादिति वक्तुं यथा युक्तिर्वर्तते, न तथा वैश्येषु इति। अत्रेदमवधेयम्—स्वस्ववृत्त्या जीविकाया अप्रसक्तौ कृषिः पाशुपाल्यं वार्ता च सामान्या सर्वैरपि स्वकर्मपालनपुरस्सरं कर्तुं शक्येति।

## आश्रमधर्मे असगोत्रविवाहः

वेदेन धर्मे बोधयितव्ये वर्णधर्मवद् आश्रमधर्मोऽपि अवस्थाभेदेन निरूप्यते कुलीनेषु वर्णाश्रमसमाजेषु। तत्र गृहस्थस्य प्रधानत्वात् सर्वाश्रमाणां योनित्वाच्च आदौ गृहस्थस्य धर्म उक्तः। अत्र असगोत्रविवाहो धर्मत्वेन साधितः, शास्त्रेषु सगोत्रविवाहे प्रायश्चित्तदर्शनात्। तत्रेयमुपपत्तिः–समानगोत्रेषु समानप्रवरेषु वा विवाहे कृते रक्तसान्निध्यात् कुलक्रमागता दोषाः प्रादुर्भवेयुः। तन्निरासाय समानगोत्रत्वं समानप्रवरत्वञ्च वर्जितम्। विशेषस्तु समाजशास्त्रे विवेचितः ( २६५ पृष्ठे ज्ञेयः )।

## विवाहफलम्

किञ्च, विवाहफलमुत्तमसन्ततिः तदा, यदा तत्र आत्मगुणसम्पत्तेः प्रादुर्भावो भवेदिति निर्णीतम्। तदर्थमुपर्युक्तो निषेधोऽपि अनुगुणः। तदुपेक्षायां पितुः प्रणरक्षणं दुर्धरं पुत्रे कर्कटसाधर्म्येण सहजशत्रुत्ववर्धनात्, "कर्कटकसधर्माणः पुत्राः पितरं भक्ष्यन्ति" इति कौटिल्योक्तेश्च। साजात्यं वैजात्यं च विजातीय-सजातीयधात्रीस्तन्यपानेन बालकेषु रोगवृद्धितन्नाशयोर्दर्शनादित्यादि प्रागुक्तमेव।

## जनसङ्ख्या

ऋतुकाले भार्यागमनविधानेन जनाधिक्यप्रसक्तिः कथं शास्त्रेण अपह्रियते ? इति चेदेवम्। स्त्रीणामवस्रावणं कर्तव्यम्, तेन न पुत्राधिक्यप्रसक्तिः। न चैवमवस्रावणे कृते अदृष्टहानिः स्यादिति वाच्यम्, अपुत्रस्य कृत एव ऋतुकाले अभिगमनविधानात्। अपि च प्रवासे अस्वस्थे वा ऋतुकालानभिगमनं न दोषाय, तमोबाहुल्ये सति तु समाजे अस्वास्थ्यस्यैव सत्वान्नादृष्टहानिः। स्वास्थ्यञ्च सुश्रुत एवमुक्तम्--

समाग्निः समदोषश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ इति।

उक्तरीत्या स्वस्थो यदि ऋतुकालाभिगमनं न करोति, तदा स दोषभाक्। इत्थञ्च राजनीत्या सत्त्वस्य लोके स्थापनं क्रियते, तर्हि प्रजाभिवृद्धौ नियन्त्रणं स्वाभाविकं

भवति। तदन्तरा उपायान्तरेण प्रजानिरोधनमनुचितं मन्तव्यम्। तदर्थं परिवार-नियोजनं काम्यते यया युक्त्या, तया व्यभिचारप्रोत्साहनं दुर्निवारम्। समाजे सत्त्वस्य स्थापने तु परसंसर्गादौ कुलीनेषु लज्जा भवति, सा व्यभिचारसदृशादकार्यान्निवर्तयति। धर्माभावे सत्त्वस्याप्रचारणे लज्जाविनाशः समाजेऽभूत्, स त्वशोभनः। अतः प्रजाभि-वृद्धितो रक्षणयापि धर्म एव हेतुरिति दिक्।

## देवताया अस्तित्त्वम्

गृहस्थधर्मे देवपूजनं विहितम्। मीमांसकैस्तु देवविग्रहो नानुमन्यते, तथापि ईशभक्तौ सत्यां कामसूत्रनिर्देशेन न सर्वेषामनुमता स्वानुरूपा उत्तमा सन्ततिर्भवतीति भारतीयराजनीतौ देवपूजा उत्तमसन्ततिलाभाय विहिता बोध्या।

नीतिसारे नीतिवाक्यामृते अर्थशास्त्रे च गृहस्थधर्माणां न्यूनाधिकसङ्ख्यया निरूपणं कृतम्, ते सर्वेऽपि सर्वेषामनुमता वेदप्रामाण्यस्य सर्वैरपि स्वीकृतत्वात्। वैशेषिक-भाष्ये तट्टीकायाञ्च धर्मस्य फलं निरूपितं तदपि २७१ पृष्ठतोऽनुसन्धेयम्।

## गृहस्थधर्मस्य नीतिलक्षणाक्रान्तत्वम्

प्रातिभं ज्ञानमिव गृहस्थधर्मफलं सुप्रजाजननं सिद्धमिति प्रत्यक्षप्रमाणप्रमितत्व-मस्य प्राङ् निरूपितम्। वेदप्रमाणेन गृहस्थधर्मस्य कर्तव्यत्वेन विधानात् तद्रीत्यापि संवादित्वमेव।

किञ्च, विशुद्धाभिसन्ध्युत्पादकस्य धर्मस्य फलं चित्तशुद्धिः सुप्रजाजननं च दृष्टं यथा भवति, तथा पारलौकिकं सुखमपि ब्रह्मादिदेवशरीरेणानुभूयमानं प्रत्यक्षसिद्ध-सुखत्वजातिमदेवेत्यग्रे वक्ष्यमाणत्वाद् गृहस्थधर्मे नीतिलक्षणसङ्गतौ न विप्रतिपत्तिः।

शब्दप्रमाणस्य अनुमाने अन्तर्भाववादिनां वैशेषिकाणां सिद्धान्ते स्वीकृते अनुमान-प्रमाणप्रमितत्वमपि तत्रार्थादेवायातमिति प्रमाणत्रयप्रमितत्वाद् गृहस्थधर्मो नीतिरेव।

## धर्मेण चित्तशुद्धेः सञ्जाता उपयुक्तता

ननु धर्मस्य फलं चित्तशुद्धिरित्युक्तं शास्त्रेषु, तत्रायं प्रश्नः—

चित्तशुद्धेः नीतौ का उपयोगिता ? इति चेदभिधीयते—चित्तशुद्धौ मनःप्रसादो संशयाभावश्च वर्तते, तयोः फलं विशुद्धाभिसन्धिः। स च दम्भरहितः सङ्कल्प इति व्याख्यातं न्यायकन्दल्याम्।

विशुद्धाभिसन्धिशून्यः अशुद्धचेतस्को जनस्तृष्णालुः परान् वञ्चयति, आत्मानं नयाभासदर्शनेन गोपायनि। स्थलविशेषेषु सङ्करकर्माण्यपि कर्तुमभिलषति। एवंरीत्या अनर्थं कुर्वन्नयमनर्थप्रकाशनशङ्कयाऽऽक्रान्तस्तिष्ठति। यत्र समाजे उक्तशङ्काक्रान्तिः,

स एकीभावेन न कथमपि स्थातुमर्हति । लोकापरक्तिश्च दुर्नयमहिम्ना प्रसज्यते । ततो रक्षार्थं विशुद्धाभिसन्धिरुपयुज्यते नीतौ । तदुक्तम्—

'लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि' । इति ।

### अपूर्वस्य प्रत्यक्षत्वम्

नन्वेवं स्वर्गसुखादीनां दृष्टत्वेऽपि यागापूर्वस्य प्रत्यक्षत्वाभावाद् नीतिलक्षणं तत्र कथं सङ्गतं स्यादिति चेत्, न, आहुतिरग्निहोत्रे पवित्रतया सुहुता सूक्ष्मा ऊर्ध्वमुत्तिष्ठति, तदाधारेण जीवोऽपि । इति जीवाधिष्ठात्री आहुतिरूर्ध्वलोकं गच्छन्ती सूर्यमण्डले प्रविशति । तत्रेन्धनकार्यकर्त्री सा कालान्तरे ततः प्रत्यावर्तमाना चन्द्रमण्डले, ततः पर्जन्ये, ततो भूमौ निपतिता सती पुरुषे विशति, ततः स्त्रियां प्रविशतीति "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति श्रुत्या साधितम् । इति रीत्या शरीररूपेण परिणतमपूर्वमपि प्रत्यक्षमेव । यन्मते ईश्वरप्रसादोऽपूर्वः, तन्मतेनेशस्य तत्प्रसादस्य च प्रत्यक्षत्वं साध्यते ।

### ईश्वरस्य बीजत्वम्

शिवशक्त्योः सङ्गमेन जगदुदयो भवतीति "द्वाभ्यां त्रयाणामुत्पत्तिः" इति भावप्रकाशनविवेचनेन प्राक् साधितम्, तद्रीत्या समस्तं जगत् सूक्ष्मरूपेण स्वस्वबीजेषु वर्तत एव, तद् यदि बीजे न स्यात्, तर्हि जगदपि नास्तीति सिद्धेः । बीजे स्थितं जगत् सूक्ष्ममुच्यते । यथा क्रमशः देशकालादिसामग्रीमवाप्य बीजे सूक्ष्मतया स्थितं व्यष्टिकार्यं यथाकालं स्थूलतया प्रकटं भवतीति यया युक्त्या साध्यते, तया युक्त्या सम्पूर्णं जगदेकत्र बीजे स्थितं वर्तत इत्यपि मन्तव्यमेव, तदुक्तम्—

एतन्नानावताराणां निधानं बीजमव्ययम् । इति ।

एकत्र बीजे स्थितेषु पदार्थेषु बुद्धिचित्ताहङ्कारमनोरूपमन्तःकरणमपि वर्तत इत्यपि सिद्धमेव । तस्याभ्युदयोऽपि जगतोऽवतरणात् प्राक् भवति, तच्च नैकम्, अत एव सङ्कल्पवशाद् देशकालमहिम्ना विभिन्नस्वभावान्तःकरणादयो जीवा दृश्यन्ते । यथा वायोः तिर्यग्गमनमग्नेरूर्ध्वज्वलनम्, अयमोऽयस्कान्ताभिसरणमित्यादि । अत एव बुद्ध्यादिषु अन्तःकरणेषु निर्मलचित्तत्व-संशयितत्व-निर्णयकारित्वाहङ्कारित्वादयोऽपि तत्र तत्र पृथक् समुदीयन्ते । इत्येवं रीत्या समष्टिकार्याणां सर्वेषामुपादानमेकमेव बीजं लाघवान्मन्तव्यम् । तदेव बीजमीश्वरः ।

### संस्काराणां कार्यकरत्वम्

एतत्प्रसङ्गात् संस्काराणां कार्यकरत्वं कथमित्युच्यते । उपासकः सङ्कल्पेन यादृशं संस्कारं उद्बोधयति, तादृशेन संस्कारेण स सर्वं साधयितुं शक्नोति । दृष्टञ्चैतद्

वृश्चिकदंशे अपामार्गस्य स्पर्शाभावेऽपि ध्यानमात्रेण अपामार्गस्पर्शभावना क्रियते, तर्हि वृश्चिकदंशज्वाला शान्ता भवति। अभिनयद्रष्टारोऽपि अप्रथमेन व्यञ्जनजनितेन व्यभिचारिभावबोधेन रजस्तमोभावापसरणाद् आनुकार्यसामाजकयोः भेदस्य विगलनेन रसस्यास्वादयितार उद्बुद्धसंस्कारेण आत्मनि अनुकार्यभावं विजानन्ति। तथैव पूजका अपि ईशमूर्ति रससञ्चारणेन ध्यानसहितेन प्रत्यक्षीकुर्वन्ति, तदा तदीयज्ञानानन्दक्रिया-प्रभा अपि आत्मनि प्राप्नुवन्ति, एकलव्यादिवत्। येषु तत्सङ्क्रमणं नास्ति, तेषां मनसि सत्त्वगुणस्यातिशयितत्वं नास्तीति मन्तव्यम्।

### ईश्वरोऽपि प्रत्यक्षविषयः

अपि चं सत्त्वगुणस्यातिशयितत्वे संस्काराणामुद्बोधाद् ध्यानमात्रेण ईश-जीवयोर्भेदविगलनाद् ईशप्रत्यक्षं भवति, रसात्मकभावेन तत्तादात्म्यस्य प्रत्यक्षविषय-त्वादनुकार्यरामादिप्रत्यक्षवत्।

साहित्यसाङ्ख्यन्यायनीतिवेदान्तशास्त्राण्युपेक्ष्य आत्मनि दोषानुद्भाव्य काल-क्षपणं न कर्तव्यम्; किन्तु विद्याचिन्तनेन ईशोऽपि रसप्रतीत्या आस्वादनीयः, चिन्त-नीयश्च। आन्वीक्षिकीसाहाय्येन पदार्थानामात्मविद्याचिन्तनेन सत्त्वं धृत्यात्मकं सम्पाद्य-मन्यथा जाड्यमेवापद्येत। एवञ्च रसरूपतया प्रतीयमान ईश्वरः प्रत्यक्षः, तद्गतो हर्षोऽपि प्रसादानतिरिक्तः प्रत्यक्षसिद्ध एव।

### आश्रमधर्मे वर्णधर्मस्य न गतार्थता

आश्रमधर्मो हि न जातिविशेषं मर्यादीकृत्य विहितो वर्तते, न कुलीनत्वप्रयुक्तं कार्यजातम्। अत आश्रमधर्मेण साङ्कर्यं न व्यपगतं भवेत्, न वा आश्रमधर्ममात्रस्य पालने सति विपदादिव्यसनप्रसक्तौ प्रतिज्ञातार्थनिर्वहणं भवेदेवेति वक्तुं शक्यम्, अतोऽ-विश्वास्यत्वमपरिहार्यं स्यात्। तदुक्तम्—

> कुलीनमकुलीनं वा वीरं पुरुषमानिनम्।
> चरित्रमेव व्याख्याति शुचिं वा यदि वाऽशुचिम्॥ इति।

किञ्च, पूर्वपरम्पराप्राप्तं यशः कुलीनैः पूर्वजैरर्जितमनुसरन् स्वापदानप्रसूतायां कीर्त्यां सम्पन्नायां विश्वास्यतायाः पात्रं भूत्वा प्रजापालनाख्ये रक्षणे राजवृत्त्यन्तर्गते अधिकृतो भूत्वा स्वकर्मणि सेवको यशोभाग्भवति। तदेतत्फलं वर्णधर्मप्रयुक्तमेव। अत एवोक्तम्—'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्', इत्यलं विवाहविचारप्रसक्तानु-प्रसक्तचिन्तया।

### विवाहपदार्थः

प्रस्तुतविवाहादिविषये विवाहपदार्थः प्रस्तूयते। तथा हि—

विजातीयसंस्कारप्रयोजकं पाणिग्रहणं विवाहः, ग्रहणञ्च ममेयमिति स्वत्वास्पद-

तथा ज्ञानं स्वत्वञ्च प्रतिग्रहजन्यं विवक्षितम् । संस्कारश्च पाणिग्रहणावधिकसप्तपदी-विहितमन्त्रसमुदायकरणकक्रियाकलापजन्यादृष्टविशेषः ।

## विवाहकालः

अष्टवर्षमारभ्य दशवर्षपर्यन्तं मुख्यकालः विवाहयोग्य इति धर्मशास्त्रमर्यादा । अनन्तरं तु तत्तद्वर्णोपनयनमर्यादानुसारेण स्त्रीणां विवाहो भवति, उपनयनस्थानीयत्वा-द्विवाहस्य । अयं गौणः कालः । स चाषोडशाच्चतुर्विंशतिवात्सरपर्यन्तं भवति । सत्य-प्येवं ऋतुदर्शनानन्तरं ( दशवत्सरानन्तरं ) सम्पन्नः स्त्रीणां विवाह आपत्कालिक एव । वस्तुतस्तु विवाहमर्यादायां न आयुर्वेदवचननिर्देशानुसारेण ऋतुदर्शनं विवक्षितम्; किन्तु दशवत्सरानन्तर्यम् अनुगमय्य तदनन्तरभावी कालो गौणकालत्वेनोक्तः, अत्र प्रमाणं २८३ पृष्ठे ज्ञेयम् । तथा च शास्त्रमतेन अन्तर्गतरजस्कावस्थायाः पूर्वमेव विवाहः कन्यानां रक्षणदृष्टया जातिशुद्धिदृष्टया च हितावह इति । अन्तर्गतरजस्कता च गर्भाद्द्वादशवत्सरे सति बोध्या । तथा च त्रिमासाधिकदशवत्सरानन्तरम् एकेनापि दिवसेनान्तर्गतरजस्कता भवतीति संस्कारकौस्तुभादौ निर्णीतमुपपन्नं भवति । अतस्तत्पूर्वकाल एव विवाहाङ्गतयोक्तः । अत्र अव्यञ्जनोपेतामित्यादीनि धर्मशास्त्रीय-वचनानि उपोद्बलकतया प्रमाणत्वेन बोध्यानि ।

## ऋतुमतीविवाहः

ऋतुमतीविवाहस्य निषेधकारणं साङ्कर्यात्समाजस्य रक्षणम् । त्रिमासाधिक-दशवर्षानन्तरम् ऋतुर्भवति, आहारादिसुव्यवस्थायां सत्यां स्त्रीशरीरावयवोपचयः पूर्णतां गच्छतीति निर्णयात् । तदनन्तरं विवाहाभावे शरीरावयवोपचयेन कामवासनाया उद्रेकात् स्वप्ने मैथुनादि सम्भाव्यते । सति च तस्मिन् रोगोऽपि सम्भाव्यते । तदानीं कस्मिश्चित् पुरुषे मनोवृत्तेर्यदि सम्बन्धो जातस्तर्हि ऋतुमतीविवाहानन्तरं पत्यन्तर-सहवासे पूर्णायुष्मत्याः प्रजाया निर्माणं कठिनम् । सोऽयं दोष आङ्ग्लैर्न स्वीक्रियते, इति तैः ऋतुमतीविवाहोपरोधो न कृतः, अत्र तु स दोषोऽसह्य इति ऋतुमतीविवाहो गौणो मन्यते ।

अत्रेदं बोध्यम्—ऋतुकालात् पूर्वं सम्पन्नेऽपि विवाहे आपस्तम्बादिभिः ऋतु-दर्शनानन्तरमेव गर्भाधानसंस्कारो विहित इति विहितेऽपि बाल्यविवाहे पतिसंसर्गस्य तदानीं प्रसङ्गो नास्ति, धर्मशास्त्रेण निषिद्धत्वात्, श्वश्र्वादिभिः कन्यायाः सुरक्षित-त्वाच्च । बाल्यकाले विवाहाभावे ऋतुमतीविवाहोऽपि प्रायश्चित्तादिना धर्म्य एव । स च आपत्कालिक इति । अत्रेदं स्मर्तव्यं यदि वाग्दानानन्तरं कथञ्चित् पतिरदृश्यः स्यात्तर्हि स राज्ञा दण्ड्य एव । वरस्य दुष्टत्वे तु वाग्दत्ता वरान्तराय देया भवति ।

## अवान्तरजातीयविवाहः

नन्वेवं विवाहविचारावसरे मुनिभिः सवर्णां लक्षणान्वितामित्येवोक्तम्, तत्रावान्तरजात्युल्लेखो नास्तीति अवान्तरजातिनिर्बन्धो विवाहे कुत उच्यते? इति चेदभिधीयते--'यथा कन्या तथा हविः' इति वचनेन यज्ञादौ येषां हविष्येषु सम्बन्धो वर्तते, तेषामेव यौनसम्बन्ध इति ज्ञायते। अतो यज्ञो यैरवान्तरजातीयैः सम्पाद्यते, तेष्वेव कन्यासम्बन्धोऽपि इति नियमः स्मर्तव्यः। किञ्च, यौनसम्बन्धे अवान्तरजातीयत्वमनियामकञ्चेत् क्षत्रियब्राह्मणयोः यौनसम्बन्धोऽपि परिहर्तुमशक्यः स्यात्। अत उक्तवचनबलाद् यज्ञसम्बन्धो यौनसम्बन्धश्च सर्वसाधारणतया कल्पयितुं न शक्यः; किन्तु अवान्तरजातीयसम्बन्धमादाय। अत एव कुलपरीक्षणं विहितं साधु सङ्गच्छते। न हि कुलपरीक्षणं ब्राह्मण्यपरीक्षणे सम्भवति, नापि च तावता साङ्कर्यदोषः परिहृतः स्यादतोऽवान्तरविभागोऽपि परीक्ष्य एव। अत एव कुमारिलपादैः समूहलेख्यं प्रवर्तितं मैथिलेष्विति प्रतिपादयन्ति। तथैवात्र भट्टपादमतमप्यनुगतं स्मर्तव्यम्।

## अवान्तरजातीयविवाहफलम्

ननु वचनसामर्थ्याद् अवान्तरजातीये विवाहे निर्णीतेऽपि तस्य किं फलमिति चेत्, न, समाजस्य नियन्त्रणपुरःसरं पारस्परिकाकाङ्क्षासंवलितं सङ्घटनम् अवान्तरजातीयविवाहफलम्, शास्त्रेण सर्वस्य समाजस्य विभजनं धर्मतः मर्यादीकृत्य वृत्त्यादि व्यवस्थापितं वर्तते। तच्च समाजान्तरीयैः साकं विवाहभोजनसम्बन्धायोग्यतयैव भवितुमर्हति। एतन्नियममुल्लङ्घ्य समाजाद्बहिष्कृतः समाजान्तरेण आश्रीयते, तस्य फलमिदमेव सम्पन्नं यत् पुत्रः पितरं तृणाय मन्यते। तथैव अवान्तरविभागपरिपालनत्यागे स्वीकृत साङ्कर्यप्रवर्तकानि बहूनि द्वाराणि भवेयुः। यथा एकर्षिवंश्यत्वेन ब्राह्मणानामनन्तरं द्विजत्वेन त्रैवर्णिकानाम्, ततो वर्णत्वेन ब्राह्मणक्षत्रियविट्शूद्राणाम्, ततः सर्वजातीयानाम्, ततः स्त्रीत्वेन पुरुषत्वेन च समेषां यौनसम्बन्ध इति कल्पने सर्वे स्वतन्त्रा निरङ्कुशा भवेयुः। अत्रापीष्टापत्तौ "काष्ठमिव हि घुणजग्धमविनीतकुमारमभियोगमात्रं भज्येत"। अतो यौनस्य भोजनस्य च नियन्त्रणमभ्यर्हितम्। केचिद् एकपङ्क्तिभोजिनां मिथः कन्यासम्बन्धो भवत्विति व्याचक्षते। तत्रैवं तत्त्वम्—

एकपङ्क्तिभोजनेन कन्यासम्बन्ध उत कन्यासम्बन्धाभावे एकपङ्क्तिविच्छेद इत्यत्र विनिगमनायां कर्तव्यायां एकपङ्क्तिभोजनं विनिगमकं न सम्भवति, यत एकपङ्क्तिभोजनवत्सु पशुपक्ष्यादिषु मिथः शरीरसम्बन्ध आपद्येत। पशवोऽपि समानजातिं यौनसम्बन्धार्थं वाञ्छन्ति, साङ्कर्यात् समाजं रक्षन्ति च। मानवस्तु नियमं विस्मरति इति महदाश्चर्यम्। तस्मादिदमेव न्याय्यं यद् यौनसम्बन्धाभावात् पङ्क्तिविच्छेद इति। अतो "यथा कन्या तथा हविः" इति वचनं उक्तकल्पनायां विनिगमनं करोति।

सर्वथा जातिविस्मृतौ मिथः कन्यासम्बन्धे प्रसक्ते अश्वतरादिवद् वैरूप्यप्रसक्तिः सन्ततिविच्छेदापत्तिः सङ्करजातिप्रसक्तिश्चेत्येवंविधदोषेभ्यो रक्षणमवान्तरजातीयविवाहफलं मन्तव्यम्। अत उदितादितत्वं वंशे कामयमानेन कुलीनत्वादिगुणसम्पत्तये विशुद्धवंशरक्षणाय च अवान्तरजातीयमर्यादारक्षणोद्योगः श्लाघनीयः। कुलीनत्वरक्षायां "ब्रह्मणोऽन्यो वा कुलपुत्रत्वान्न व्यभिचरति" इत्याद्युक्तं फलमपि स्मर्तव्यम्।

## अन्नसमृद्ध्यभावे परिवारनियोजनम्

नन्वेवमपि प्रजावृद्धिपरिमाणतः अन्नोत्पत्तिर्न्यूनपरिमाणा, तदा परिवारनियोजनं शास्त्रसम्मतमस्ति, न वेत्याशङ्कते, तत्राहुः—शास्त्रे ऋतुकालेऽभिगममात्रं न विहितम्; अपि तु पूर्वोक्तप्रजाशुद्धिप्रयाजकगुणवत्त्वविशिष्टत्वमपि। यदि तत्सर्वं वंशे समस्ति, तर्हि तथाविधवंशे प्रजाबाहुल्यस्यावसर एव नास्ति। किञ्च, प्रजाबाहुल्यमभूदिति परिवारनियोजनचिन्तापेक्षया धनधान्यसमृद्धिः चिन्तनीया। तत्रेदमेवोच्यते यद् बालकस्य उत्पत्तेः पूर्वं प्रकृतिर्यथा तत्सङ्गोपनाय दुग्धनिर्माणं चिन्तयति, तेन सह इदमपि अस्मत् कर्तव्यं यत् शोकादिवशाद् गर्भिण्या दुग्धनाशो यथा न भवेत्तथा सा रक्षितव्या इति च। तथैव गोरूपेयं पृथ्वी अन्नावस्थातः पूर्वं वृक्षेषु क्षीरं विसृजत्येव, अस्माभिस्तु सा क्षीरनाशकात् प्रकृतिक्षोभात् रक्षणीया। यदि च सा अस्मासु मातावद् वात्सल्यभावं भजते, क्रोधशोकराहित्यञ्च, तर्हीयं बालकानामदृष्टानुरोधेनान्नं वितरिष्यत्येव। साम्प्रतमधर्मप्रचारात् प्रमादाद् अनुचितशासनेन दुःखमनुभवन्ती भूमिरुद्विग्नमना वर्तते। तद्दोषात् सा रक्ष्यते, तर्हि अन्नसमृद्धिर्भविता।

अपि च अन्नफलोत्पत्तिः पृथिव्या हर्षानुभाव इति पृथ्वीधर्मसंवादे प्रथमस्कन्धे श्रीमद्भागवत उच्यते। अधर्माभिवृद्ध्या सा न हृष्यति, ततो रोमाञ्चाभावः, अतो न समृद्धिः, तदर्थं गेहे गेहे पूजायां घण्टानादः कर्तव्यः। वार्तालापोऽपि शमप्रधानः कर्तव्यो भवति। स-रि-ग-म-पस्वरैः स्वर्यमाणः स्वर आनन्दाधायको भवति वृक्षाणाम्। सति च तस्मिन् पादपाः फलमिषेण रोमाञ्चिता भवन्ति, अन्यथा क्लिश्यन्ति। भारतदेशः पुण्यैः आर्यैरधिष्ठितः पुनरपि शमप्रधानवार्तालापेन संयोजनीयः, शासनेन सञ्चारणीयो भारतीयराजनीतिसिद्धान्तः प्रतिष्ठापनीयश्च, तदैव अस्य देशस्य पूर्ववद् अकृष्टपच्यसस्यसम्पत्तिमत्त्वं साधितं भवेत्। एवञ्च आर्यमर्यादापालनं धनवृद्धिहेतु स्मर्तव्यम्। अन्यच्च इलेक्ट्रानप्रभृतय असङ्ख्याताः परमाणवः किरणाः परिभ्रमन्तः संयुक्ता अन्नं यथेच्छमुत्पादयितुं समर्था वर्तन्ते; किन्तु तेषां संयोग एव न भवतीति महान् खेदः। अतस्तत्संयोगाय यतनीयम्। तस्य च कृते धर्ममर्यादां विहाय अन्यः पन्था नास्ति। धर्मेण भवति देवगुरुभर्तृप्रसादः, स च न्यायतः परिपालने। न्यायश्च धर्ममर्यादाया अतिक्रमणान्नश्यति।

धर्मातिक्रमणे केन किं कर्तव्यं को वा न्याय इत्यादि सर्वमसमाहितमेव। यथा गर्भपातः कदाचिद् दुष्टोऽभूत् कदाचित्तु स एवादुष्ट उद्घुष्यते। एकत्र हिन्दूनां सङ्ख्याह्रासः चिन्त्यते। अन्यत्र हिन्दूनां गृह एव परिवारनियोजनमपि काम्यते। अतः सर्वं दुर्वचम्। इति सत्त्ववर्धने जनसंख्या मर्यादिता भवेदन्नसमृद्धिश्च स्यादिति।

## विघसाशित्वम्

गृहस्थधर्मेषु देवतापित्रतिथिभृत्येषु त्यागो धर्म इत्युक्तम्, तत्र राज्ञा ब्राह्मणादिभुक्तशिष्टान्नभोजनं विघसाशनात्मकत्वात् कर्तव्यम्। भृत्यैस्तु राजभोजनानन्तरमिति विवेकः। अत्र प्रमाणं ३९० पृष्ठे द्रष्टव्यम्।

ननु विघसाशित्वे को लाभः ? इति चेन्मायाजय एवेति स्मर्तव्यम्। देवतायै यजने यत् समर्प्यते, तद्ब्राह्मणेभ्यो दीयते, तर्हि देवता भुञ्जत इति सिद्धान्तितत्वाद् देवतापित्रतिथिगुर्वाद्यर्थं क्रियमाणस्यान्नस्य समर्पणं तेभ्यो दत्त्वैव राज्ञो भोजनं प्रशस्तम्। भृत्यास्तु राजसेवका इति तैः राजभोजनानन्तरमेव भोक्तव्यं भवति।

## विघसाशित्वविधेः परिसङ्ख्यात्वम्

न च देवतापित्रतिथिभृत्येषु त्याग इत्युक्त्यैव भुक्तशिष्टभोजनलाभसम्भवे पुनः टीकायां विघसाशित्वाभिधानं व्यर्थमिति वाच्यम्, तस्य परिसंख्यापरत्वात्। तथा च देवतापित्रतिथिगुरुभुक्तावशिष्टातिरिक्तस्य अपरेण भुक्तशेषस्य भोजनं राजा न कुर्यात् "पञ्च पञ्चनखा भक्ष्या" इतिवदिति। अन्यत्र विस्तरेणाभिहिता गृहस्थधर्मा भूतरक्षायामिज्यायां च अन्तर्भावयितव्याः। 'गृहिणो भूतरक्षेज्या' इति श्रीमद्भागवतवचनप्रामाण्यादिति सर्वं सुस्थम्।

## ब्रह्मचारिधर्मफलम्

अथ ब्रह्मचर्यधर्मविषयः प्रस्तूयते। गुरौ वासो विद्योपार्जनार्थम्। अग्निकार्यं तेजोबलसम्पादनार्थम्। भैक्ष्यमात्मरक्षार्थम्। ब्रह्म वेदस्तदर्थं चरतीति ब्रह्मचारी। व्रतचारिता स्वाध्यायाध्ययनेन [ओजोभिवृद्धिसत्त्वगुणोत्कर्षप्रतिभोत्पादनार्थम्। त्रिसन्ध्यं स्नानं शान्तरसपरिचयार्थम्। स्वास्थ्यासत्त्वे तु मन्त्रस्नानम्। शौचात् स्वाङ्गजुगुप्सापि फलं बोध्यम्। इदमुपलक्षणं सन्ध्योपासनादिकार्याणाम्। वेदाध्ययनसमये सञ्जातस्य दोषप्रकोपस्य शान्तये 'समेखलो जटी' इत्यादयो नियमा वार्तिके नीतिसारे उक्ताः स्मर्तव्याः।

## अग्निकार्यस्योपयोगः

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते" इत्युक्तत्वाद् अग्निकार्ये हुताऽऽहुतिस्तन्वी भूत्वा ऊर्ध्वं गच्छति, सा सूर्यमण्डले प्रविश्य कतिचित्कालं तत्रेन्धनकार्यं

सम्पाद्य चन्द्रमण्डले, ततः पर्जन्ये, ततो भूमौ तत अन्ने, ततः पुरुषे, ततः स्त्रियां गर्भरूपेण परिणमते। तदानीं पावित्र्यात् प्रतिभादयो गुणा अपि नासुलभाः। शेषं 'शान्ति का अग्रदूत' ग्रन्थे व्यक्तम्।

### ब्रह्मचर्यव्रतनियमस्य नीतावुपयोगः

ब्रह्मचारिणां व्रतस्य त्रीणि दृष्टफलानि। तेषु ब्रह्मचारिणे तदीयशममाधुर्यप्रतिभोद्बलेन प्रसन्नैस्संवासिभिर्भिक्षार्पणमित्येकम्। यत एवंविधब्रह्मचारिदौर्लभ्यावस्थायां तथाविधस्य गृहस्थद्वारा भिक्षाप्रदानाय प्रतीक्षणं बभूव। यदि ब्रह्मचारी विद्यासम्पन्नः परहितकारी वर्तते, तस्य च मुद्रापि तदनुबन्धिनी चाबाधा, तर्हि तथाविधं प्रति राक्षसप्रकृतिं विहाय अन्यः सर्वोऽपि अनुरज्यत इति द्वितीयं फलम्। मित्रसम्पत्तिमतो लक्ष्मीरपि न दुर्लभा। यद्यपि विद्यालक्ष्म्योर्विरोधो वर्तत इत्युच्यते, तथापि स विरोधो विद्वत्सु लोकसङ्ग्रहाभावे प्रजानुरागप्रयुक्तो बोध्यः। धनमदातिरेकेण धनिनः सकाशाद् विद्या विरज्यति। यदि चोभावपि नीतिमन्तौ, तदा तु न विरोधः। तथा च ब्रह्मचर्यव्रतपरिपालने धनप्राप्तिः, ईशप्रसादश्चेति तृतीयं फलम्। तदुक्तम्—

नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा।
तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा॥ इति।

### नैष्ठिकब्रह्मचर्यस्य फलम्

नैष्ठिकब्रह्मचर्यफलं तु वेदो वेदौ वेदाश्वाऽध्येतव्याः। तत्रैव आनन्दानुभूतिश्चेद् नैष्ठिकं ब्रह्मचर्यं सम्पन्नं ज्ञेयम्। मेखलादिधारणे वृष्यत्वम्, बलम्, प्रतिभा, अध्ययनश्रमप्रयुक्तदोषशान्तिश्च फलम्।

### जटित्वमुण्डित्वयोर्व्यवस्थितविकल्पता

उपकुर्वाणकेण मुण्डिना भाव्यम्। नैष्ठिकेन तु जटिलेन वा सम्भवितुं शक्यते, तस्य गृहस्थधर्मे प्रवेशाभावात्। न च क्षौरममङ्गलमुच्यते, न, तस्य प्रथमालङ्कारत्वात्। केशधारणेन दौर्बल्यमुष्णता चेति दोषौ स्मर्तव्यौ, केशानां मलत्वात्। कामसूत्रे भावप्रकाशे च प्रमाणं द्रष्टव्यम्। एतेष्वपि गुरुभक्तिर्मुख्या विद्याप्राप्तये साधनत्वेन निर्णीयते।

### गुरुभक्त्युपयोगः कलौ अभ्यर्हितः

ननु राजसु तत्स्थानीयेष्वन्येषु वा सत्सु गुरुभक्तिः कथमिवोपयुज्यते? यतो न जानीमस्तदुपयोगम् तज्जन्यकार्यस्य प्रकारान्तरेणापि साधयितुं सुशकत्वादिति चेत्सत्यम्। भक्तिर्हि फलं साधयत्यचिरेण यथा, न तथाऽन्यो योगः। स्फुटीकृतञ्चैतद्योगसूत्रटीकायाम्। तद्यथा—तपस्स्वाध्यायादिषु क्रियायोगेषु सत्स्वपि ईशभक्तिः पुनः कण्ठरवेणोक्ता, तत्र कारणं शैघ्र्येण क्रियासाफल्यमेव। तच्चेशचिन्तनमात्रेणार्थानां

प्रकाशनमेव। स चेशो न साधारण्येन जनानां दृष्टिगोचरः, अतस्तदधिष्ठितं ज्ञानं यत्र गुरुशरीरे तस्य भक्तेर्माध्यमेन चिन्त्यते। ईशोऽपि तेन नासुलभो भवति। ( तदेतत् पृ॰ ३०० उद्धृतात् वाक्याज्ज्ञेयम्। ) वस्तुतस्तु गुरुप्रणिधानं ईशप्रणिधानापेक्षयोत्कृष्टमिति "यस्य देवे परा भक्तिः" इत्यादिना निवेदितमस्ति। अतो दृष्टफलत्वात् सारल्येन शास्त्रप्रसूतज्ञानप्रतिभाप्राप्तये गुरुभक्तिरुपयुज्यते। न चेदृशी गुरुभक्तिः गृहस्थेन प्राप्तुं न शक्येति शङ्क्यम्, गृहस्थस्य विनयशीलस्यापि तद्योग्यत्वात्। सम्पूर्णप्रजारक्षणाय बद्धप्रतिज्ञेन राज्ञा ओजःशौर्यादिगुणसम्पन्नेन गुरुभक्तिपूर्वकं यदि व्यवह्रियते, तर्हि तर्कात्मकसमाधिभाग्भवति स इत्यपि निश्चप्रचमेव।

## गुरुस्वरूपम्

वरिवस्यारहस्यादौ गुरुस्वरूपं 'विवेकवृत्त्यवच्छिन्ना चिद्' इति निरूपितम्। सा यत्र शरीरे प्रकटा तच्छरीरमुक्तचितेः शरीरमिति निर्णयन्ति योगिनः। यद्येवंविधं स्वरूपमचिन्तयित्वा गुरुः सेव्यते अथवा न सेव्यते, तर्हि विवेकवृत्तिरेव दुर्लभा। तद्दौर्लभ्ये तु मायाप्रयुक्तं वास्तविकवस्तुस्वरूपादर्शनमपि दुरपनेयमेव।

## शास्त्रज्ञानस्येशत्वं गुरुत्वं निर्दुष्टत्वञ्च

पुनरिदं चिन्त्यते—गुरुणापि सा विवेकवृत्तिः शास्त्रत एव प्राप्तुं सुशकाऽभूत्तस्यैव निर्दुष्टत्वादबाधितार्थप्रत्यायकत्वाच्च।

किञ्च, शास्त्रं सम्यक्तया करणीयवर्जनीययोर्विधायकत्वाद् मधुसूदनसरस्वतीप्रभृतिभिर्वेदान्तिभिः "सत्यं ज्ञानम्" इति वाक्यानि प्रमाणीकृत्य निर्दुष्टं याथार्थ्यविषयकं ज्ञानमेव ईश्वरस्य शरीरमिति साधितम्। तच्च यतो विलसितमस्ति, सोऽपि गुरुरीश्वरस्वरूपान्नातिरिच्यते। अतो गुरुः ईशरूपतया अन्तेवासिभिः संसेव्यते। शास्त्रज्ञानस्य निर्दुष्टत्वं प्रमाणत्रयप्रमितार्थबोधकत्वादबाधम्। यस्य गुरुभक्तिर्नास्ति, तस्मै प्रमाणत्रयप्रमितत्वं न रोचते, तथापि यत् सत्यं तत्सत्यमेव। अतः शास्त्रमादिमो गुरुरस्मन्मते। तत्सम्पत्तिः यच्छरीरान्तर्वर्ति कोशे, स कोशो विज्ञानमयः। तस्य श्रद्धा शिरः, ऋतं सत्यञ्च दक्षिणोत्तरपक्षौ योग आत्मा तस्योपेक्षणं स्वदौर्भाग्यमेव। केवलमालस्येन तद्द्वेषेण वा निर्दुष्टस्य शास्त्रस्य विज्ञानमयस्यादेशं स्वीकर्तुं यो न प्रवर्तते, स हस्तगतं मणिं विनाशयति, मनोमयकोशे अभिमानात्मके आत्मानमवस्थाप्य अन्धे तमसि पातयति च। अन्नमयप्राणमयमनोमयकोशानां स्वारस्यं जीवमात्रेण ज्ञायते; किन्तु तमोगुणसत्त्वेन शास्त्रतत्त्वं विवेचयितुं तस्य सामर्थ्यं न भवति। जाड्यमत्रैवोत्पद्यते। नेदं सर्वस्य सुलभं सम्मोह एव आनन्दभानेन निश्चिन्तमवस्थानात्। मोहश्च मनोमये रसमयजीवने भवति। सति च तस्मिन् तमोगुणप्रसक्तिः, अभिमानश्च। तदानीं न शास्त्रार्थं मनुते। तर्कोऽपि न समुदेति। यदि चामुं दोषं मनोमयकोशे स्थितो जीवो तत्त्वेन भयात्, तर्हि

अभिमानं पृष्ठतः कृत्वा विज्ञानार्थं गुरुं सेवेत, गुरुश्च सेव्यः। तदेतद् भारतीयनीत्या साधितं 'सुनिपुणमुपसेव्य सद्गुरुम्' इत्यादिना। गुरुश्च शनैः शनैर्दोषं प्रकाश्य शिष्य-मभिमानशून्यं करोति, ततो बोधयति, तर्कस्योदयाय प्रवर्तयति च। अतो विवेकवृत्त्य-वच्छिन्नचिद्विशिष्टो गुरुः शास्त्रमादिममिति सिद्धम्।

## गुरोः सौलभ्यम्

अत्रेदमवधेयम्—वर्तमानसमये तथाविधो गुरुर्नास्ति दौर्लभ्यात्, तथाविधस्य गुरोरभावात्। तत्रेदं चिन्त्यते–गुरोरभावो नास्ति इत्यस्यार्थो तद्दर्शनं न भवति, अथवा शिष्येषु दोषबलात् तथादृष्टिर्गुरौ नास्ति, दोषश्च शङ्कात्मक इति वा। तत्र शास्त्रस्य गुरोः सत्त्वाद् गुरुर्नास्ति इति न; किन्तु शास्त्रनिष्णता एव शास्त्रं शङ्कन्ते, अविश्वास-मुत्पादयन्ति। ज्ञानप्रभायामानन्दप्रभामिश्रणं नास्ति तेषु। मुखे मालिन्यं वर्तते। विपरीतमुपदिशन्ति पुत्रान्, विपरीतमनुतिष्ठन्ति च। एतैर्दोषैराच्छादनात् शिष्येषु दुष्टतेति गुरुदर्शनं नास्ति। शास्त्रं च गुरुतत्त्वमधुनाप्यस्त्येव। तत्र समुदितानां शङ्कानां निरसन-मान्वीक्षिक्या कर्तव्यम्। तदर्थं पण्डितसङ्गतिरपेक्ष्यते। तदभावादेव शास्त्रं कार्यकारि न भवति। अतोऽपि विद्याप्रतिष्ठया गुरुदौर्लभ्यं व्यपगतं भवेत्।

अपि च अधुनापि विद्वांसो विवेकवृत्त्यवच्छिन्नचिद्विशिष्टा न सन्तीति न; अपि तु तथाविधानां तेजः अभिभूतमिवास्ते। एतद् दोषनिरसनाय पण्डितसङ्गतिः परीक्षास्थापना चोपायत्वेन निर्दिष्टा, सा धर्मविजयनाटकोक्तदिशाऽभ्यूहनीया। यद्येतत् सम्भाव्यते, तर्हि दुर्लभतां गतं गुरुतत्त्वं सुलभं भविता। सति च सौलभ्ये प्रमाणत्रयमा-धारीकृत्य राजनीतिमादृत्य विद्यानां स्वरूपं प्रकाशितं चेत् समाजस्य हितं भवेत्। सामाजिकहितदर्शनमुपेक्ष्य कृतं कार्यं न समेषां रुचिकरं भवति। हितप्रदर्शनमुखेन विद्यातत्त्वप्रकाशने तु न कस्यापि विरोधः। केचन बहुमतं शास्त्रमादाय फलं साधयितुं वाञ्छन्ति। सन्तु कामं तथा। यदबाधितं प्रमाणत्रयप्रमितं तत्तथैवेत्यत्र तु न वादः।

## शास्त्रेषु सामाजिकमनसामाकर्षणायोपायः

वर्तमानसमये लोकमतं शास्त्रेषु नास्ति, तथापि शास्त्रविदामिदं कर्तव्यं यल्लोकस्य आकाङ्क्षामालोच्य तदनुवर्त्तनं शास्त्रेषु यथा भवेत्, तथा प्रदर्शनीयम्। साकाङ्क्षता च समाजे अधिकारिवर्गभेदेन भिन्ना वर्तते। सा चाष्टविधा कामुक-विदग्धश्रेष्ठिविरागिशूर-ज्ञानवयोवृद्धरसिकबालमूर्खविलाभेदात्। अतस्तेषां सन्तोषाय शास्त्रीयं वस्तु विद्वद्भिर्नटैः नाटकेषु तथाऽभिनेतव्यं स्यात्, यथा सामाजिकानामष्ट-विधानामपि मनोरथपूर्तिः स्फुटा स्यात्। अभिनयश्च शृङ्गारादिरसाद्यन्यतमप्रधानो भवति। तत्रापि विशेषतया शास्त्रीयं तत्त्वमद्भुतरसेनाभिनेतव्यं भवति। यतो हि शृङ्गारवीरशान्तरौद्रान्विहाय अवशिष्टरसेषु बहुसङ्ख्याकाः पुरुषाः समाजे विचरन्ति,

तेष्वेव गुरुशास्त्रभक्तिः सङ्क्रामणीया वर्तते। तदर्थञ्च विद्वद्भिरद्भुतरस उपाय आश्रय-णीयः, यतस्तद् व्यभिचारिभावेषु तर्को मतिर्मदश्च वर्तते। तैरेव करुणभयबीभत्सरस-मया वशीकर्तुं शक्यन्ते। करुणे तर्कस्य, भयानके मदस्य, बीभत्से मतेः समुल्लासात्। अद्भुते ध्यानसत्त्वात् तद्बलेन शास्त्रे भक्तिः मनसामाकर्षणं च सम्भवेत्। अतस्तर्कादि-व्यभिचारिभावमुखेन विवेकवृत्त्यवच्छिन्नचिद्रूपशास्त्रप्रचारार्थं गुरुणा आत्मनि अद्भुतरसस्याविर्भावो यथा भवेत्, तथा यतनीयम्। एतत्कार्यार्थं युक्तयुञ्जानभेदेन विभिन्नैः वीराद्भुतरससम्पन्नैः गुरुभिर्भाव्यम्। नेयेषु शिष्येषु बीभत्सादिप्रकृतिर्जन्मत एव वर्तते, तदर्थं प्रयासोऽनपेक्षित इति उपर्युक्तः क्रमो नासम्भवीति दिक्।

## समस्तशास्त्रचिन्तनम्

नन्वेवं शास्त्रमनन्तं तस्य चिन्तनं सर्वैर्दुरूहमिति चेत्तदपि न। अद्भुतरसो हि वीरेण सत्यशौर्यत्यागाविस्मयाविसंवादित्वगुणसंयुतेन साधनीयः। वीरो हि यदभ्यूहति, तदार्षमेव भवति, तस्य अनूचानत्वात्। अतस्तेनाभ्यूहितः प्रयोगविधिरपि शास्त्रसम्मत एव। न ह्यत्रानौचित्यं सम्भाव्यते। तदिदं सावधानतया कृतं नासुलभम्। तेनानुष्ठितं च हितं व्यपदिश्यते। तथाविधो विद्वान् धर्मविजयनाटकोक्तदिशा मान्यो भवति, तथा-विधस्य मनुना मान्यस्थानत्वनिर्देशनात्। यद्यपि बहुलैर्मूर्खैः विद्यावन्तोऽवमन्यन्ते, तथापि विद्याविद्भिर्यो मान्यः, स सर्वमान्य इति निर्णीतमेव। तदेतत् परीक्षित्सभायां शुकागमनचरित्रेण स्पष्टम्। यो महाजनपरिगृहीतः, स सर्वेषां मान्यो भवतीति वेद-प्रामाण्यसाधनावसरे भाष्यादौ च निरूपितमस्ति।

## विद्वदसौलभ्यकारणम्

न च परम्परायामेवंविधं गुरुतत्त्वमसुलभं कुतोऽभूदिति शङ्क्यम्, वृत्तिव्यवस्था-विलोपाद् विद्यावतामवमाननाच्च। सर्वाऽपि वर्षाशनव्यवस्था अर्थशास्त्रेणानुमोदिता मानसादौ उक्ता विलुप्ता। यत्र साऽऽसीत्, तत्र दण्डव्यवस्था नाभूत्। स च दण्डो विद्या-भिरूप्याभावे तद्वंश्यस्य वृत्तिव्यवस्थाविलोप उक्तः। तद्भावाद् विद्यावंशे प्रमादोऽ-भूत्। राजसम्माननं विद्यावतामासीत्, तत्पुनः प्रवर्तनीयम्। असूयां विहाय ज्ञानिभिरपि विद्वांसो मन्तव्याः। तदभावेन विद्यावतामसौ लभ्यमभूत्। तदुक्तं समर्थैः—'ब्राह्मण बुद्धि पासूनि चेविले गुरुत्व साण्डूनि गेले'। "ब्राह्मणत्वस्य रक्षणेन रक्षितः स्याद् वैदिको धर्मः" इत्यप्युक्तं आचार्यैरिति।

तस्माद् विदुषां विद्यावदुपेक्षणं राजसञ्चालितवर्षाशनव्यवस्थाविलोपनं दण्डा-प्रणयनञ्च विद्वद्विलापे कारणम्। पुत्रस्थानीयेषु शिष्येषु विद्यातत्त्वं यावन्न सङ्क्रम्यते, तावल्लोकविश्वास्यत्वं विद्वत्सु न सम्भवेदिति गुरुभिः "आवहन्ती वितन्वाना" इत्यादि-

मन्त्रा जप्तव्याः। "आमायन्तु ब्रह्मचारिणः स्वाहा" इत्यादिमन्त्रा अपि स्मर्तव्याः। अस्य निर्गलितार्थः श्रीभगवत्पूज्यपादैः प्रदर्शितः प्रश्नोत्तर्याम्—

वित्त त्यागसमेतं ज्ञानमगर्वं क्षमान्वितं शौर्यम्।
दानं प्रियवाक्सहितं एतच्चतुर्विधं भद्रम्॥ इति।

## वानप्रस्थस्योपयुक्तता

अथ वानप्रस्थविषयः प्रस्तूयते—नन्वेवं वानप्रस्थस्य नीतौ क उपयोग. ? इति चेत, तपोऽन्वीक्षे एवेति ब्रूमः। योऽपि वानप्रस्थधर्मो विहितः, स सर्वोऽपि तपोऽन्वीक्षार्थमेव। तपः अनशनम्। अन्वीक्षा च तर्कप्रवाहः समाधिः। तपोऽन्वीक्षोद्देश्येन वानप्रस्थो वने निवसति, लोककूटे 'कार्बनडाइआक्साइड' दोषस्योत्पत्तेः। वने देवतानां सान्निध्यमपि तेषां कृते नासुलभम्, तीर्थयात्रावसरे देवैर्वने निवासकरणात्, सत्त्वगुणोद्बोधनाच्च। लोके निवासे चाञ्चल्याद् एकाग्रताया अभावेन अन्वीक्षानुदयाच्च वने वानप्रस्था वसन्ति। भगवत्पूज्यपादैरपि 'तरुतलवासः' सत्त्वोदयार्थं उक्तः। वानप्रस्थस्य ब्रह्मचर्यं पत्नीसत्त्वेऽपि धर्मशास्त्रेण पुत्रोत्पादननिषेधात्। वानप्रस्थस्य भूमिशय्या वातदोषापहारिणी भवति, अजिनस्योपयोगः पुरश्चर्यार्णवे व्यक्तः। वानप्रस्थेन अन्यानिरपेक्षेण प्रतिग्रहान्निवर्तनीयम्।

ननु कलिवर्ज्योऽपि वानप्रस्थः कौटिल्येन कथं विहितः ? इति चेत्, न, सुराग्रहस्य कलिवर्ज्यत्वेऽपि सौत्रामणियागो विहित एव। तथैव तपोऽन्वीक्षापयुक्तं वानप्रस्थकर्म सौत्रामण्युपयुक्तसुराग्रह इव वानप्रस्थैः संसेव्यमिति भावः।

## संन्यासविधौ अनारम्भः

अथ संन्यासतत्त्वमभिधीयते—गृहस्थेन चरित्रं स्थाप्यते। तस्याभिनेयौ आस्वादार्हौ शृङ्गारवीरौ। तदनुगुणं चरितमेवाभिनेतव्यं भवति गृहस्थेन। स एव चरित्रस्यारम्भ औत्सुक्यं भवति। तदेव बीजम् उक्त आरम्भो वा उच्यते नाट्ये। ततो यत्नप्राप्त्याशा नियताप्तिफलागमा भवन्ति। तथा सत्येव त्रिवर्गफलतदुपाययोर्बोधकं नाटकं पूर्णं भवति। तेषामेव छेदः मुखप्रतिमुखगर्भविमर्शोपसंहृतिरूपसन्धीन् विभिद्य नाट्ये व्यक्तः। तदेतत् सर्वं गृहस्थाश्रमकृते शोभनम्, न संन्यासे। तत्र तु आरम्भादीनां परित्यागो विधिपूर्वकं कर्तव्यो भवति, चात्वाले कण्डूयनार्थं स्वीकृतशृङ्गपरित्याग इव। तदेतदालोच्य संन्यासे अनारम्भो विहितः। तथैवात्राश्रमेऽस्मिन् शोकादिवृत्त्यभावादपि अनारम्भो भवति। अनारम्भ अनुत्साहः।

नीत्या संन्यासेऽपि शौचं विहितम्, तेनेदं ज्ञायते यत् सर्वेषां सामान्यधर्मेषु शौचस्य परैरसंसर्गस्य स्वाङ्गजुगुप्सोपधायकस्य विधानात् तस्य च वेदेनैव ज्ञायमानत्वात् सर्वापि भारतीयराजनीतिर्धर्मप्रधानैव स्मर्तव्या।

## संन्यासधर्मस्य विशेषता

"भिक्षोर्धर्मः शमोऽहिंसा" इति वचनात् लौकिके इष्टसाधने सर्वत्राहितं बुद्ध्वा ततो निवृत्तौ सुखभानं चेत्, शमो भवति, स च संन्यासिषु वर्तते। सोऽयं द्रुतगामी भवति, सत्त्वबाहुल्येन शरीरलाघवात्। अयं निर्विकारी सूक्ष्मेक्षिकया प्रजायां सम्भवन्तं दोषं निरसितुं यथापराधं दण्डव्यवस्थां विदधाति, शौचादिमहाव्रतसम्पन्नस्यैव तथाविध-कार्यानुष्ठाने सामर्थ्यात्। अत एव अध्यात्मविन्न्यायनिर्णयार्थं सदस्यत्वेन व्रियते धर्मा-सनादिषु। सभासदस्यानामध्यात्मविदां तत्त्वमिदमेव यत् सर्वत्र स्वीयत्वदर्शनम्। यथा शरीराधिष्ठितो जीवो न कमपि अवयवं पक्षपातेन रञ्जयति विरज्यति वा, तथैवायं समाजे संन्यासो समस्ति। तदपेक्षयापि यदा विराट्पुरुषः सन् जगदात्मत्वेन पश्यति, तदा तस्य मध्यमत्वमुदासीनत्वमपि व्यपगतं भवति, तदुक्तम्—

> अयं निजः परो वेति गणना लघुचेतसाम्।
> उदारचरितानां तु वसुधैव कुटुम्बकम्॥ इति।

अन्यच्च अयमेकाग्रो योगी राजनीत्या प्राधान्येन समाद्रियते। यतो नीत्यनुष्ठाने प्रतिक्षणं प्रयोगा विभिद्यन्ते, तेषु कतमः प्रयोगः कदा अनुष्ठेय इति नीतिशास्त्रेण निर्णेतव्यं भवति। यस्मादिदं प्रयोगशास्त्रम्, तथैव प्रयोगपरिवर्तनमपि अपच्छेदन्यायेनैव कर्तव्यं भवति। इदमेव विद्वत्त्वम्। तत्तु लोकेन साधारणेन न सम्पादयितुं शक्यते। यतो हि प्रयोगपरिवर्तने निर्णेतव्ये निर्मिताद्यपि सूक्ष्मतया विवेचनीयं भवति, कुशलवैद्येनेव निमित्तभेदेन त्रिदोषप्रकोपे। अत अध्यात्मविद् नीतिप्रयोगपरामर्शे प्रयोगपरिवर्तनादि विधातुमधिकृतः।

किञ्च, राजनीतावभ्यर्हितानां सामाद्युपायानां प्रयोगस्य फलानुबन्धिनः कुशल-ताया सम्पादनमध्यात्मविदेव साध्यमिति ध्यात्वा सोऽत्र विहितः। यद्यपि शमप्रधानाना-मध्यात्मविदां सुखं लौकिकैर्नानुभूयते, तथापि विद्याशमसन्तोषनिमित्तं तैरनुभूतं सुखम-लौकिकं अलीकं वा न मन्तव्यम्।

## राज्ञोऽन्योऽध्यात्मविद्

ननु न्यायप्रदानार्थं राजा स्वतन्त्रो निर्णायकोऽस्ति, भारतीयनीतिमतेन तत् कथं सङ्गच्छत इति चेत्, न, राजा विजिगीषुरपि वर्तत इति कृत्वा मन्त्रनिर्णयाय अध्यात्म-वित् शमप्रधानो विद्याशमसन्तोषनिमित्तकसुखस्यानुभविता य आत्मानं नीत्यै अर्पयेत्, स संन्यासो विवक्षितः; स राज्ञोऽन्यो विहितः। किञ्च, संन्यासे सति सर्वविद्याशक्ति-सम्पादनमपि अस्य धर्मस्य विशेषस्तस्मात् स्मर्तव्यः। तत्स्मारितं मम्मटेन "नियतिकृत-नियमरहिताम्" इत्यादिना।

यद्यप्यस्मिन् पद्ये कार्योदयो नोक्तस्तथापि 'भारती जयति' इति शब्देन स एवं धर्मः स्मर्तव्यः। भारती च सङ्कल्पो नादः अध्यात्मवित्सु विद्युदेव, यतः स लोह-चुम्बकवद् विद्युत्वद्वा आकर्षणादिकर्म करोति। विद्युति चुम्बके वा जडत्वं भवति, सङ्कल्पे तु चेतनत्वमिति वैधर्म्यं तयोर्ज्ञेयम्। सङ्कल्पनिष्ठमिदं तत्त्वं तेजोरूपं योगवासिष्ठे-नापि सिद्धं भवति। तद् विद्युत्कार्यसाधर्म्याद् विद्युतो नातिरिक्तम्। विद्युता जडया निर्जीवानां मण्डूकानां नेत्रेषु उन्मीलननिमीलने सम्पाद्येते, दन्तिकाकचस्पर्शेन रोमाञ्चो-त्पत्तिर्दृष्टा, तदेव सामर्थ्यमध्यात्मवित्सङ्कल्पेऽस्ति। एवमेव नटानां शरीरे रोमाञ्चादयो विद्युत्सञ्चारमहिम्नैव इत्याद्युपपत्तिः सङ्गीतरत्नाकरोक्ता स्मर्तव्या। एतत्त्रितय-साधारण्येन कार्यकारणभाव एक एव विवेचयितव्यः। सेयं सङ्कल्पशक्तिरुपासक-शरीरान्तःस्थितं वायुं प्रेरयित्वा वह्निज्वालामुत्पाद्य शरीरे उष्णतां समुत्पादयन्ती नादात्मना परिणमति। सा उपासकैः प्रणवरूपेण उपास्यते, तस्य नादस्य उपास्यस्य प्रणवस्य च बहुदूरं व्याप्तिरस्तीति शारदातिलकादावुक्त रेडियोद्वारा प्रत्यक्षीक्रियते। एवंरीत्या शमप्रधानस्य संन्यासस्य महानुपयोगः सिद्धो राज्यसंरक्षणे न्यायनिर्णये च।

## वानप्रस्थसंन्यासयोरन्तरम्

वानप्रस्थेनान्वीक्षायां कर्तव्यायां शमप्रधानेन भाव्यम्। संन्यासिनाऽपि अन्वीक्षा कर्तव्यैव। तयोरिदमन्तरं यद् वानप्रस्थे ओजो वर्तते, अतस्तेन आन्वीक्षिकी प्रधानत्वेना-नुगन्तव्या भवति। तत्र चित्तद्रुतिर्नास्ति, अत एव न माधुर्यमपि। संन्यासे शमप्रधाने तु ओजो नास्ति, माधुर्यमेवास्ते। तेन निर्मितेन काव्येन चरितेन नाट्येन वा सामाजि-कानां चेतसि द्रवीभाव उत्पत्तुमर्हति। तेन महतो जनसमूहस्य शृङ्गाररसिकस्याकर्षणं सम्भवति। अत एव सर्वरसानुभवानन्तरं शमप्रधानस्य माधुर्यस्यास्वादे जीवो विश्रा-म्यतीति शान्तरसप्रकरणे भावप्रकाशने व्यक्तम्। इति हृदयम्।

## संन्यासधर्माणामनुगमेनोक्तिः

अत्रेदमवधेयम्—अपरिग्रहः संन्यासिना कर्तव्यो भवति, तस्य वैराग्याधिकारि-त्वात्। जीवनं तु "तस्य चीराणि किं पथि न सन्ति" (पृ० ३१८) इति श्रीमद्भागवत-निरुक्त्या दैवं सञ्चालयति। अतः स प्रतिग्रहं त्यजति विधिवदिति अपरिग्रहस्य निष्किञ्चनतायामन्तर्भावः। अहिंसा साधारणधर्मान्तर्गतेति न तस्या उपन्यासः। समता मिथ्यात्वनिश्चयाभावः। प्रियाविकारितायां सा धृतौ संगृह्यते। सत्यां च तस्यां हर्षशोकयोरभावेन सङ्गत्यागान्नातिरिच्यते समता। व्रतचारिता ब्रह्मचर्यो। जितेन्द्रियत्वमेव मौनम्। एवं समाहारधारणाध्यानान्यपि।

## मनसो निग्रहे धारणाध्यानविमर्शः

अथ जितेन्द्रियता मनसो वशीकार एव सम्भवति, स च धारणैव; परन्तु मनसो अणुरूपत्वेन प्रत्यक्षायोग्यत्वेन च तद्धारणं कथं सम्भाव्यत इति चेत्, न, वायुर्मनसः

सहचरितो भवति। वायुश्च रक्तवहनाड्या प्रवहति। यतो हि आयुर्वेदज्ञा शिरावेधे कृते रक्तस्रावे बुद्बुदान् दृष्ट्वा वायुप्रवाहमनुमिन्वते। अतो वायुप्रवहनाड्यो शारीरकविज्ञानद्वारा परिचेयाः प्रत्यक्षगोचरा यदि नियम्यन्ते, तर्हि वायोर्नियमनाद् मनसोऽपि एकत्र देशेऽवस्थापनं नाशक्यम्। तदेव धारणा भवति। तदुक्तं देशबन्धश्चित्त-धारणेति। तन्नियमनप्रकारश्चेत्थम्—विषयविशेषकामुकस्तद्विषयोत्कटेच्छामवलम्ब्य विजातीयप्रतिबन्धकमपसार्य स्वस्वजातीयविषयं चिन्तयति ध्यायति च। तेन चिन्ता-विषयो मानसमूर्तिरूपतां प्राप्नोति। अतः सा प्रत्यक्षविषयो भवति। तन्नियमनाद् ध्येया मूर्तिर्यदि वायुना संसक्ता प्रत्यक्षेण विषयीक्रियते, तर्हि मूर्तिसंसर्गाद् वायुरपि प्रत्यक्षगोचरो भवितुमर्हति, धूलिकणेन वायोरपि चक्षुषा अलौकिकसन्निकर्षेण दृश्य-त्ववत्। एवञ्च मूर्तीनां ध्याने स्थैर्ये वायोरपि स्थैर्यं स्यादेव। मूर्तयश्च मधुरसाप्लुता भाव्याः। एवंरीत्या वायोर्नियमने अभ्यस्तो योगी तन्त्रोक्तदिशा उदानवायुमपि स्वेच्छया सुषुम्नया नाड्या ध्यानेन प्रतिलोमगत्या संचारयितुं प्रयतते, तर्हि तत्सिद्धौ उदर्यमग्नि स वायुः ब्रह्मरन्ध्रं ज्वालामुखेन प्रापयति इति दृष्टम्। तदानीं योगी नाहं ज्वालायाः शृणोति, स एव कुण्डलीनामम्बिकेत्यादिनाम्ना व्यपदिश्यत इति प्रागुक्तम्। उक्तरीत्या मनः सहचरितं प्राणवायुं नियमयितुं तीव्रा इच्छाशक्तिः समर्थेति तां 'विल्पावर' शब्देन व्यपदिशन्ति आधुनिकाः। यदि वृद्धानां जीवनरक्षा वर्तते, तर्हि तैरिदं चिन्तनीयं तत्त्वम्। प्राणधारणाख्योऽयं व्यापारः प्रयत्नपूर्वको यावद् भवति, तावत्पर्यन्तं धारणाख्यो भवति। तत्प्रयुक्तमदृष्टमुत्पन्नं कार्यं स्वयं करोति, तदा ध्यानं भवति। तत्प्रवाहो समाधिरुच्यते। ध्येयमूर्तिभेदेन ता योगसिद्धान्तचन्द्रिकायां स्तम्भ-न्यादिनाम्ना व्यवहृताः स्मर्तव्याः। धारणाध्यानाभ्यां पृथक् सर्वेन्द्रियसमाहारोऽपि नीतिसार उक्तः, तस्य प्रयोजनमनुपेक्ष्यैव। विषयेषु इन्द्रियप्रवृत्तौ सत्यां तत्संयोगो भवति। स अनिष्टत्वात् सर्वथा न कर्तव्य इति भावः। अयमेव असम्प्रयोगोऽन्तर्मुखपरिणामः प्रत्याहारः, तत्रापि कारणं प्रागुक्ता धारणैव स्मर्तव्या। हर्षजनकमधुररसमूर्तिमुपेक्ष्य रसाधानकर्मणि सङ्कल्पात्मिकां शक्तिं परिधुन्वन् किमपि न साधयितुं सुशक्तः। अतो वैराग्यमपेक्ष्यते। तदभावे ओजसोऽभाव एवेत्यलं विस्तरेण।

## नाडीपरिचये नीतिप्रवृत्तिः

ननु सत्यप्येवं विद्यावन्तः कथमिवोदासीना नीतिमार्गादिति चेत्, विद्यावता-मप्रवृत्तिः कृतिसाध्यत्वादि निर्णयाभावादिति मन्तव्यम्। अत एव ज्ञानप्रभायां क्रिया-प्रभामिश्रणाभावेन सङ्कल्पशक्तिरपि तिरोहिता वर्तते। अत्र मूलं शरीरापरिच्छेद इति नाडीस्वरूपं तैश्चिन्तनीयं स्यात्। तथाहि मस्तिष्केण सह रसननासिकादीन्द्रियैः सह संयुक्ता अनेकाः शिराः संलग्नाः सन्ति। तासु काश्चिज्ज्ञानसंवाहिकाः, काश्चित् क्रियावाहिकाः, काश्चिद् उभयप्रापिकाः। एतासां प्रत्यक्षं छिन्न एव शरीरे वर्तते।

तत्संख्याक्रमोऽपि प्रत्यक्षशारीरके गणनाथसेनेन विस्तरेणोपवर्णितः। विद्वांसः प्रायः चेष्टाज्ञानोभयसम्पादिकाभिः शिराभिः सह परिचिताः। तत्र ज्ञानवहशिरासु क्रियाया अभावः। अपरत्र ज्ञानाभाव इति न साफल्यम्। अत उभयसम्पादकनाडीषु परिचय आवश्यको वर्तते। अपरे तु बुद्धिमत्वं कृतिमत्वं च दैवाधीनं मन्यन्ते। तन्न सम्यक्। यथा सीतायां हलप्रकर्षणप्रयुक्ता रेखाः सम्भवन्ति, तथा मस्तिष्के गर्ताः रेखाद्वारा कारयितव्यः। तदर्थं यत्नो विधीयते, तर्हि बुद्धिमत्त्वं भवति, सति च तस्मिन् बलवर्णस्मृतिवाक्प्रवृत्तयोऽपि सुशकाः। तदर्थमुदानवायोरूर्ध्वमुच्छलनमपेक्षितं तस्य क्रमो निर्दिष्ट एव। तदर्थं चान्वीक्षिकीप्रयुक्तो विवेकोऽभ्यसनीयो यथा भवेत्, तथा प्रयत्न आवश्यकः। एतन्मते सुषुम्नामार्गेणोदानवायोरुच्छलनमेव विवेकः। यदि गुरुः ज्ञानक्रियोभयसम्पादकनाडीस्पन्दनपुरःसरं शिष्यमुपदिशति, तर्हि शिष्यः स्वोद्दिष्टार्थप्राप्तये कृतिसाध्यत्वमिष्टसाधनत्वं ज्ञात्वा पूर्वनिर्दिष्टं सङ्कल्पं साधयितुं शक्नुयादित्यलमतिविस्तरेण।

## अन्विताभिधानादिविवेकः

ज्ञानक्रियाप्रापकनाडीनां भेदो यथा दृष्टिगोचरः, तथा अन्विताभिधानादिभेदोऽपि बोधवैजात्यं शास्त्रेषूपवर्णितं व्यावहारिकमिति प्रसङ्गाद् विमृश्यते। ध्यानेन नियन्त्रितेन उदानवायुना सह उदर्योऽग्निः ऊर्ध्वमुत्तिष्ठन् ब्रह्मरन्ध्रं प्राप्तो नादरूपतां गतो ज्ञानपदव्यपदेश्यो योगिभिः श्रूयते। संसारिभिस्तु अव्यक्ततयाऽवगतः मध्यमास्थितः क्रमेण यदा वैखर्यावस्थां प्राप्नोति, तदा श्रूयत इत्याकरे प्रपञ्चितम्। मध्यमायां स्थिताः सर्वेऽपि पदार्थाः सूक्ष्मरूपेण बीज इव नानुव्यवसायार्हाः। अनुव्यवसायाभेदश्चेन्द्रियादिकारणकलापभेदेन नादभेदाद् अनुव्यवमायेऽपि वैजात्यमनुभूयते, यथेन्द्रियसर्निकर्षः प्रत्यक्षे हेतुर्ज्ञानेन अनुमितिः।

पश्यतः श्वेतिमादाय ह्रेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दाच्च श्वेतोऽश्वो धावतीति धीः॥

इत्यनुभवसिद्धत्वात् स्वस्वस्थाने स्थिता अपि पदार्थाः पारस्परिकाकांक्षावशात् तदीयसम्बन्धबोधकानां कारणपदं विनापि अश्वविषयकं बोधमश्वद्रष्टृसु उत्पादयन्ति। तथा पदान्यपि इति बोधवैजात्यं सिद्धम्। अत एव नञ्घटितवाक्येभ्यो निरवच्छिन्नविशेष्यताको बोधश्च तथात्वादेव विजातीयत्वं जगदीशादिभिः साधितम्। एतदनुभूयैव कालिदासेनापि विद्वत्सन्तोषोऽपि स्वतन्त्रतया स्वकृतौ प्रामाण्यसाधक उक्त इति गुरूपदेशं विना प्रत्यक्षादिनाऽवगतोऽप्यर्थोऽप्रामाण्यकबलतामुपेत्येवेति कविभिरुक्तं साधीयः। तच्च 'चित्रकूट के घाट पर' इत्यादिषु अनुभूतम्। अतः शाब्दबोधस्य विजातीयत्वमनुभवसिद्धम्। अत्रेदमवधेयं यद् बोधविषयेषु प्रतिभातः सम्बन्ध आकांक्षाभाष्यः, क्वचित्परम्परात्मको यथा घटदण्डयोः कार्यकारणभावघटकः

स्वजन्यभ्रमिजन्यभ्रमिमत्ता, क्वचित्तु समवायतादात्म्यादिः, आकांक्षाभास्यत्वात्। अतोऽन्वयबोधो विजातीय इति मन्यन्ते कोविदाः।

विशिष्टो बोधः विशिष्टवैशिष्ट्यमर्यादां नातिशेते, इत्यपि विशिष्टबोधे वैशिष्ट्यस्य प्रतियोगी तस्यावच्छेदकं किमिति जिज्ञासायां ते ते आचार्या अधिकारिभेदेन पृथक् पृथग्वर्णयन्ति। तद्यथा प्राभाकराः शब्दश्रवणानन्तरं कार्यान्वितमर्थमनुभवन्ति। भाट्टा अन्वितम्। नैयायिका अनन्वितमिति। तदनुभव-वैजात्ये तेषां तेषामाचार्याणामनुभव एव बीजं मन्तव्यम्। एतत्साहित्यप्रक्रियया स्फुटीक्रियते। एतत्प्रक्रियायां शाब्दबोधो मतिभावस्य अन्तर्गतेन चित्तसन्तोषेन व्यज्यते अभिनयादौ। तत्राप्येक एव वाक्यं श्रुत्वा सर्वेषां सन्तोषः समान इति न बालकानां पण्डितानां बोधवैचित्र्यदर्शनात्। तथा हि बालका वाक्यार्थमजानानाः प्रयोजकप्रयोज्यवृद्धव्यवहारं दृष्ट्वा क्रियया आवापोद्वापाभ्यां घटादिपदानां शक्तिं कार्यान्वितेऽर्थे जानन्तस्तत्रैव सन्तुष्यन्ति। तमिमं बालकानां सन्तोषं परिलक्ष्य धर्मे प्रवर्तकत्व वेदस्यास्तीत्यनुसन्धाय च प्राभाकराः कार्यान्विते शक्तिं प्राहुः।

भाट्टादयस्तु प्रयोजकप्रयोज्यवृद्धव्यवहारमन्तरापि नाट्यादौ वेषविशेषेण राम-कृष्णाद्यर्थमनुभवन्ति। तन्महिम्ना विशेषेण सह पदार्थस्यानुभवः साधारणेऽ जात इति अन्वितानुभवं गदन्ति भाट्टाः। नैयायिकादयस्तु अत्रैवमभिदधति -सामाजिकसुख-मालोच्य अभिनेतारोऽपि तदीयहर्षादिव्यापारमात्रेण सुखमभिव्यञ्जयन्ति। इत्यलं सङ्कल्पे कृतिसाध्यत्वविचारप्रसक्त्या।

## भावशुद्धेरुपयुक्तता

धर्मनिरूपणप्रसङ्गाद् भावशुद्धेरुपयुक्तताया नीतौ क उपयोग इति चेत्, भाव-संशुद्धया भुक्तस्य पाचनार्थं नियुक्तानां शारीरयन्त्राणां सुचारुत्वसम्पादनम्। संशुद्ध्यभावे कामपरतन्त्रो जीवो न्यूनतामनुभवन् न हृष्येत, ततो विषीदेत्, ततो मन्दाग्निः, ततः पाचनमनुपपन्नम्। नीत्यवलम्बने तु भावसंशुद्धौ नायं दोषः पदमा-दधाति। सोऽयं विशेषो धर्मनिरूपणावसरे विस्तरेण प्रपञ्चितः। अत एव राग-द्वेषयोः क्लेश अन्तर्भावो योगसूत्रेणोक्त उपपन्नो भवति। इति हृदयम्। एवञ्च स्वधर्मो नीतिशास्त्रोक्तनीत्यात्मको भवति। स च समस्तविद्यास्थाननिर्णीतो ग्राह्यः। सोऽयं धर्मोऽ-नुष्ठातारं स्वर्गं प्रापयति। तदभिलाषाभावे मोक्षमानन्दम्। स्वर्गश्च "यन्न दुःखेन सम्भिन्नम्" इति लक्षणलक्षितो बोध्यः।

## धर्मनीत्योरन्तरम्

धर्मो वेदबोधितेष्टसाधनताकः। नीतिस्तु प्रमाणत्रयनिर्णीतेष्टसाधनताका। तेन नीत्यतिरिक्ते अदृष्टमात्रसाधनभूते धर्मे चार्वाकादयः सन्दिग्धा भवन्तु कामम्।

नीतौ तु न तथा, तत्र प्रत्यक्षप्रमाणप्रमितत्वनिवेशात्। आस्तिका अपि शब्दप्रमाण-सन्निवेशाद् असन्दिग्धं तत्र प्रवर्तितुमर्हाः। अत एव वाग्भटादिभिः आयुर्वेदे प्रत्यक्षानुमान-प्रमितत्वाद् धर्म्यमपि संस्कारमुल्लिलिख्युः कर्तव्यत्वेन। तदेतद्भेदमालोच्यैव नीते-र्लक्ष्मीस्वरूपत्वं नारायणस्य धर्मत्वमुक्तं शास्त्रेषु। इत्थञ्च ब्राह्मण-ब्रह्मचारिवद्धर्म-नीत्योः व्याप्यव्यापकत्त्वे बोद्धव्ये। जैनबौद्धादिभिरपि इदं नीतिस्वरूपं स्वास्थ्याय कामितं तत्र टीकायाम्। आधुनिकविद्वद्भिः रामचरितमानसेऽस्य समादरः कृत एव। न चैव-मियं नीतिरपि पराक्रमणाय प्रवृत्ता येन सा जनानुरागोत्पादनेऽसमर्था भवितुमर्हतीतर-राजनीतिवत्। धर्मत्वव्याप्यत्वात् शास्त्रसम्बन्धाददृष्टोत्पादकत्वाद् विनयशीलत्वादत्र तमोबाहुल्यं नास्ति।

## स्वर्गानन्त्यनयोः प्रत्यक्षप्रमाणप्रमितत्वम्

नन्वेवं नीतिसाध्यमदृष्टं तत्राद्यः स्वर्गोऽपि इत्युक्तम्, तत्रायं प्रश्नः—स्वर्गस्यातीन्द्रि-यत्वात् तत्साधनत्वमतीन्द्रियम्, तत्साधनभूतस्य नीतित्वेन प्रतिपाद्यमानस्य धर्मस्य स्वर्गानन्त्ययोः नीतौ कथमन्तर्भावः? उच्यते—यन्न दुःखेन सम्भिन्नमिति लक्षणोक्त-दिशा धारावाही दुःखरहितोऽभिलाषोपनीतः सुखविशेष एव स्वर्गपदवाच्यः। तस्य प्रत्यक्षत्वमेव सुखस्य सत्त्वेन सर्वस्य कामनाविषयत्वात्प्रत्यक्षत्वाच्च। यद्यपि परलोके जनि-ष्यमाणस्य सुखस्य तद्व्यक्तित्वेनाप्रत्यक्षत्वमेव, तथापि तद्वृत्तिजातेः प्रत्यक्षविषयता इह-लोकेऽपि अस्त्येव। सामान्यलक्षणाप्रत्यासत्त्या उपनिषदा निर्दिष्टे उपदिष्टाया राज्यादि-सुखपरम्परायाः तैस्तैरनुभूयमानायास्तत्त्वं भिक्षुकेण सदा परितुष्टेन अनुभूयमाने स्वसुखे अनुभूयत इति श्रोत्रियस्य चाकामहतस्य चेत्यादिना प्रतिपाद्यते। "मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः" इत्यप्यनुभवं प्रमाणम्। अपि च एकाग्रतापुरस्सरे ध्याने यत्सुखं तदेव निद्रायां सुखानुभवं साजात्यमन्तर्भवति, उभयोरपि व्याधिनिराकरण-सामर्थ्यात्। तामेव जातिमनुसन्धाय चार्वाका अङ्गनालिङ्गनजन्यं सुखमनुभवन्ति। श्रोत्रिया अपि अकामहतं सुखं तत्सजातीयमेव। नन्वेवं सर्वं सुखमेकजातीयं चेत्, शास्त्रा-नुसारी पन्थाः कुत आश्रयणीय इति चेत्, न, अनुभूयमानसुखत्वाश्रयत्वस्य वास्तविकत्व-ज्ञापनं शास्त्रार्थप्रयोजनमिति। न च सुखत्वस्य प्रत्यक्षत्वेऽपि स्वर्गसुखत्वस्य तदाश्र-यस्य प्रत्यक्षमस्मासु नास्तीति वाच्यम्, तस्येष्टत्वात्। सर्वः सर्वेण दृश्यत इति नियमा-भावात् सामान्यलक्षणया तस्यापि प्रत्यक्षविषयत्वात्।

वस्तुतस्तु आस्तिक्यादिगुणाभिव्यक्तसत्त्वगुणानालम्ब्य नीत्यनुष्ठाता अदृष्ट-मुत्पाद्यात्रैव परलोके जनिष्यमाणस्वर्गसुखसमानजातीयमेव शमसुखमनुभवन् आत्मानं कृतार्थं मनुते। स एव सकामश्चेत्, तत्तदेव शरीरमुपलभ्य सुखमनुभवति। देवशरीरञ्च राजादिभावेनोत्पन्नेषु ललितगत्यादिविशेषेण प्रत्यक्षगोचरीभवति, तच्च नास्य

शास्त्रेण स्पष्टम्। राजतदितरयोर्गतेरन्तरं प्रचुरसत्त्वप्रयुक्तलाघवमूलकम्, एवञ्च देवादिशरीरेणानुभूयमानसुखवृत्तिसुखत्वस्य तदाश्रयस्य च नाप्रत्यक्षत्वम्।

एवं मोक्षोऽपि प्रत्यक्षगोचरत्वादुपेक्षणीयो नास्ति नीतिविदां मतेनापि। यतस्तत्र दुःखध्वंसे स्वसमानाधिकरणदुःखसमानकालीने, नित्यसुखाभिव्यक्तौ वा अभिव्यक्तम्, तस्मिन् सुखे या प्रत्यक्षविषयता सा पूर्ववदुपपन्नैव। तद्यथा दुःखध्वंसे दुःखासमानकालीनत्वं सुषुप्तौ वेद्यं भवति। वेद्यस्य तस्याश्रयत्वं जीवसुखे अस्तीत्यत्रैव वादः प्रत्यक्षत्वं त्वस्त्येव, प्रत्यक्षत्वेन स्वर्गसुखत्ववत्। एवं नित्यसुखमपि सुषुप्तौ वेद्यमेव। साक्षादपरोक्षाद् ब्रह्मेत्युक्तेः। तच्छ्रद्धालुभिः शास्त्रनिरपेक्षैर्धर्ममुपेक्ष्य विचरद्भिः अवेद्यमपि तन्नास्तीति वक्तुं न शक्यते, शुकादिभिरनुभूयमानत्वात्। इत्येवं स्वर्गमोक्षौ दृग्गोचरौ स्तः! प्रसङ्गादिदमपि स्मार्यते यद् भारतीयनीतिमर्यादायां भूदेवो नरदेवो वा भवति नीतिमान् यथा, तथा परलोके सुखाभिलाषुकश्चेत्, स कर्मदेवादिपदं प्राप्य नारायणः शिवो वाऽपि भवितुमर्हति। इति नीतिकल्पतरौ व्यक्तं वेदितव्यम् ( ३५० पृ० ), यच्च गतानुगतिकत्वं लोके व्यवह्रियते, तत्तु आलस्यादिमत्स्वेव शोभते। तस्मान्नीतिधर्मस्य नीतित्वमुपपन्नमिति दिक्।

## उच्चनीचभावः

अथ स्वर्गफलोपलब्धावपि तत्कालं स्वधर्मपालने वर्णाश्रमे उच्चनीचभावदोषोऽपरिहार्य एव। तथासति भेदोऽपि आपद्यते। तत्परिहार एवमत्र चिन्त्यः—उच्चनीचभावस्तु न धर्मप्रयुक्त एव; किन्तु गुणतारतम्येनोच्चनीचभावोऽन्यत्र सर्वत्रापि वर्तत एव। तन्न्यायेनात्रापि स्वस्वकार्ययोग्यत्वमनुसन्धाय तेषां तेषां नीतिविद्भिर्नियोजनं क्रियते। नहि केवलं जन्मैवानुसन्धाय। एवं समानो यदि न स्यात्, तर्हि सोऽपराधी नीतिमानेव भवति। सति च गुणसम्मानने कुलीनः स्वस्वकर्मणि कुशलो भवति। तदेतदननुसन्धाय उच्चनीचभावप्रयुक्तो भेदो जनापरागजनको यत्र वर्तते, तत्र कारणमुच्चत्वेनाभिमतद्वारा नीचस्याभिमत''''परस्पराशङ्कनम्। अतः प्रकृतिव्यसनेऽन्तर्गतं पारुष्यादि सर्वथा परित्याज्यं चेत्, न, भेदा वा''''। न च स्पृश्यास्पृश्यत्वे तु स्वधर्मे भेदप्रयोजकेस्त एवेति शङ्क्यम्। इयं व्यवस्था कुलीनत्वप्रयुक्तगुणप्रतिभोद्बोधनाय वर्तते, विवाहभोजनपूजनादिषु। राजनीतौ तु अर्थसम्बन्धिनि व्यवहारे तत्तत्कर्मकुशलस्य समादरः समान एव वरीवर्तते। जातिप्रयुक्तकुलीनत्वसाङ्कर्याभावाय राजनीत्या काम्यते। कतिपयैर्धूर्तैः आंग्लैः स्वराष्ट्रानुकूलशिक्षां विधाय अस्मद्देशे समाजे परस्परं भेदार्थस्तदनुकूलो बीजावापः कृतः। तत्र सावधानतया भाव्यम्।

## स्पृश्यास्पृश्यभावे लोकसम्मतिः

सुखण्डीशीतलाप्रभृतिरोगनिवारकत्वेन वस्तुतः स्पृश्यास्पृश्यविभाग आयुर्वेदसिद्धो धर्मशास्त्रेणाप्यनुमोद्यते। पुष्पवतीनां स्त्रीणामस्पृश्यत्वं कल्याणकरं तद्भावे तदभावो

नियतः। अत एव स्पृश्यास्पृश्यविभागाभावानुयायिषु यवनादिषु सुखण्डीप्रभृतिरोगाणां प्राचुर्यं दृश्यते। शीतलाप्रकोपस्तु स्पृश्यत्वास्पृश्यत्वविचारे परित्यक्ते वर्धत इति सिद्धम्। अतो विभिन्नकुलेषु परम्पराप्राप्तानां कीटाणूनां तत्रैव पर्याप्तये तत्संसर्गप्रयुक्त-रोगाभावरक्षणाय वर्णादिसापेक्षायां विभागो नीत्याऽपि सम्मन्यन्ते। सोऽयं विषयः चिकित्साचन्द्रोदयत उद्धृतो मस्तिष्करोगे विवृतः शङ्कामपसारयति। स च विभागो वेदात् प्राप्तो राजनीत्यानुगम्यते।

### वेदपरिग्रहः

यतोऽदृष्टं तत्साधनत्वं वा प्रत्यक्षानुमानवादिनां बुद्धिर्नावगाहते। वेदमन्तरा यद्यवगाहेतापि, तर्हि तत्र नास्ति समाश्वासः, तेषु सफलत्वांशे अभ्रमस्यादाढर्यात्। किं बहुना, समस्तशिष्टपरिगृहीततत्तदाचार्यसमादृतवेदविरोधे उत्तरवर्तिष्वेव अप्रामाण्या-शङ्कनात्, येषु कार्यपूर्ववर्तिषु अकारणत्वं व्यवहृतं तद्भिन्नेष्विति निर्णयाच्च। तथा सत्येव अनन्यथासिद्धत्वावगाहनात्। तथाविधः शिष्टः पूर्वस्मादपि प्रथमो वेदः, अतोऽदृष्टांशे तत्साधनत्वे वा वेदस्योपयुक्तत्वात् स एव राजनीत्या अनुमतः। एतद्वैशद्यार्थं कारणत्वं परिष्कृतमुच्यते सङ्क्षेपात्। सोऽयं कार्यकारणभावः—

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम्॥

इत्यादि पद्यादिनाभिहितः कारिकावल्यादिग्रन्थेषु। अत्र "अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता" इति कारणत्वव्याख्याने श्रीमहादेवभट्टप्रभृतिभिस्तदीयदलसार्थक्या-वसरे अनन्यथासिद्धत्वमेवं परिष्कृतम्—"यत्र यत्र प्रामाणिकानाम् अकारणत्वव्यवहार-स्तत्तद्भिन्नत्वम्" इति। अत्रेदमनुसन्धेयम्—घटं प्रति कारणत्वविचारावसरे दण्डचक्रादि-पदार्थजातं विहाय सर्वत्रैव प्रामाणिकानाम् अकारणत्वव्यवहारो यदि स्यात्तर्हि ताव-तैव दण्डत्वादिभिः सह सर्वेषामेव उदासीनपदार्थानां व्यावृत्तिर्भवितुमर्हति, तथापि 'प्रसक्तं प्रतिविध्यते' इति नियमानुसारेण कारणत्वलक्षणघटकं नियतपूर्ववर्तित्वं यत्र, तेषु दण्डत्व–दण्डरूप–शब्दजनक–कुलालजनक––तत्तद्रासभादिषु कारणत्वस्य प्रसक्ति-स्तत्रैव अकारणत्वव्यवहार इति कृत्वा प्रामाणिकानाम् अकारणत्वव्यवहारः, अजागल-स्तनायमानेष्विव दण्डत्वादिषु पञ्चसु सङ्कोच्य व्यवस्थाप्यते। तद्भिन्नत्वम् अनन्यथा-सिद्धत्वम्।

अत्रायं प्रश्नः—कारणत्वस्य जिज्ञासायां तल्लक्षणेऽनुसन्धीयमाने यद्यकारणत्वं पुनरपि निवेश्यते, तर्हि आत्माश्रयादिदोषेण कारणत्वलक्षणमनन्यथासिद्धत्वं च दुरव-गाहं भवति। तत्रेदं प्रातःस्मरणीयैः गुरुवर्यैरनुशील्य यदादिष्टं तदस्माभिः सर्वैरेवादृत्य दग्धाश्वरथन्यायेन सर्वान् विचारानेकीकृत्य अभिधीयते।

तत्रान्यथासिद्धत्वं लघुनियतपूर्ववर्तिभिन्नत्वे सति सम्बन्धकृतगुरुत्ववत्त्वे सति कारणतावच्छेदकधर्मत्वं प्रथमम्, यथा घटं प्रति दण्डत्वादेः। लघुनियतपूर्ववर्तिभिन्नत्वे सति सम्बन्धकृतगुरुत्ववत्त्वे सति कारणतावच्छेदकधर्मभिन्नत्वं द्वितीयम्[1], यथा घटं प्रति दण्डरूपादेः। प्रकृतकार्याजनकजनकत्वावच्छिन्नत्वे सति गुरुनियतपूर्ववर्तित्वज्ञानविशेष्यत्वं तृतीयम्, यथा घटं प्रति आकाशस्य। प्रकृतकार्यजनकजनकत्वावच्छिन्नत्वे सति गुरुनियतपूर्ववर्तित्वज्ञानविशेष्यत्वं चतुर्थम्, यथा घटं प्रति कुलालपितुः। स्वान्वयव्यतिरेकानुविधायि-अन्वयव्यतिरेकाप्रतियोगित्वे सति चतुर्विधान्यथासिद्धभिन्नत्वे सति उपस्थितिसहकृतत्वं पञ्चमम्, यथा घटं प्रति रासभस्य। अनया रीत्या अन्यथासिद्धत्वनिर्वचने कृतेऽपि कारणत्वलक्षणे कारणत्वघटितत्वमपरिहार्यमेवेति कृत्वा एतद्विचारे भगवद्भक्तैर्निर्दिष्टा श्रुतिप्रतिपादितेच्छैव शरणं भवति। तदनुसन्धानेन प्रामाणिका दण्डचक्रादिसमवायं सङ्घट्टयितुं तदा वाञ्छन्ति, यदा घटचिकीर्षवो भवन्ति। एतदनुसृत्य प्रामाणिकेच्छां गृहीत्वाऽत्र कारणत्वं परिष्क्रियते। तत्र रामरुद्रान्तग्रन्थपर्यालोचने कृते तैः प्रतिपादितस्य कारणत्वस्य प्रामाणिकेच्छामादाय एवं परिष्कारो भवति। कार्येच्छोत्तरेच्छाविषयभिन्नत्वविशिष्टाः कार्यनियतपूर्ववर्तिनोऽन्यथासिद्धाः। तद्भिन्नत्वे सति नियतपूर्ववर्तित्वं कारणत्वमिति।

प्रातःस्मरणीया गुरुचरणा अत्रैवमाहुः—कार्येच्छाधीनेच्छाधीनेच्छाभिन्ना या कार्येच्छाधीनेच्छा, तद्विषयत्वे सति नियतपूर्ववर्तित्वं कारणत्वमिति।

अत्रेदमनुसन्धेयम्—यथाऽव्यवहितोत्तरत्वपरिष्कारे कार्याधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वोक्त्या कार्योत्तरक्षणोत्तरक्षणानां सर्वेषामपि व्यावृत्तिर्भवति, तथैव कार्यसम्पत्तीच्छया कारणसंयोजनेच्छा यथा भवति, तथा तत्सम्पादनार्थं तत्कारणानां सम्पादनेच्छा भविष्यत्येव, तासां समस्तानामिच्छानां निरासाय कार्येच्छाधीनेच्छाभिन्नत्वं निविष्टम्, एतद्भिन्नत्वं कार्येच्छासहिततत्पूर्वतनेच्छासु वर्तते, तद्वारणाय विशेष्यदलं बोध्यम्। तदिदं निर्दुष्टं लक्षणं भवत्येव, तथापि व्यतिरेकव्यभिचारमुखेन कार्याधिकरणवृत्त्यभावप्रतियोगित्वज्ञानेन कारणत्वग्रहो न भवतीति समाप्तिसाधनमङ्गलविचारावसरे ग्रन्थकृद्भिरुच्यते। तेषां समस्तानां शिष्टानां व्यवहारेण तत्प्रतिबन्धकत्वज्ञानपुरस्सरं कारणत्वस्वरूपपरिचयार्थमान्वीक्षिकीविद्भिरुक्तलक्षणे कार्यनियतपूर्ववर्तित्वमप्यनुसन्धेयम्। एवंविधः शिष्टाचारस्तत्त्वचिन्तामणिकृतां श्रीमतां गङ्गेशोपाध्यायानां ग्रन्थे हेत्वाभासप्रकरणे 'यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वम्' इत्यत्र 'लिङ्ग'पदप्रवेशेन दृश्यते। चिकीर्षाप्रवृत्त्योः सामानाधिकरण्यनियमेन चिकीर्षाघटितलक्षणमिव तदधीनप्रवृत्तिघटितं लक्षणमपि सुधीभिः अनुसन्धातुं शक्यते। एकस्य निर्दुष्टान्यनेकानि लक्षणानि तत्तत्साधर्म्य-तत्तत्पदार्थनिर्वचनप्रकरणे

---

१. चतुर्थान्यथासिद्धेऽतिव्याप्तिवारणाय लक्षणे कारणवृत्तित्वं देयमिति केचित्।

दृश्यन्ते। न हि तत्र एकेनापरस्य निष्प्रयोजनकत्वं ( वैयर्थ्यं वा ) जिज्ञास्यते। उपर्युक्तरीतिमनुसृत्य अन्यल्लक्षणं यदि केनचित् क्रियते, तद्यपि नास्माकं हानिः।

अत्राधीनत्वं चोत्तरत्वरूपमेव ग्राह्यम्, स्वरूपसम्बन्धरूपं वा, कार्याधिकरणवृत्त्यभावप्रतियोगितावच्छेदकसंसर्गतावच्छेदककारणत्वमिव। तत्तत्कार्यव्यक्तिमनुसन्धाय उपर्युक्तलक्षणे स्वत्वनिवेशे कृतेऽननुगमो भवतीत्यनुगमरसिकानां तर्ककर्कशविचारचतुराणां प्रमोदाय अनुगमोऽपि निर्दिश्यते—

इच्छा(कार्येच्छा)विशिष्टधर्मवत्त्वं कारणत्वम्। वै० स्वप्रयोज्येच्छाविषयतानवच्छेदकत्व-स्वप्रयोज्येच्छाविषयतावच्छेदकत्व-स्वविषयतावच्छेदकावच्छिन्नस्वविषयतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितस्वविषयाव्यवहितपूर्वक्षणावच्छिन्नवृत्तित्ववदभावीयकिञ्चित्सम्बन्धावच्छिन्न( स्वप्रयोज्येच्छाविषयतावच्छेदकसम्बन्धावच्छिन्न )प्रतियोगितानवच्छेदकत्वं तत्त्रितयसम्बन्धेनेति। सर्वत्र इच्छायां शिष्टसमवेतत्वं विशेषणं देयम्। अत्र समूहालम्बनेच्छादिकमादाय यद्युदासीनेऽतिव्याप्तिराशङ्क्यते, तर्हि तद्वारणाय सामान्यनिरुक्तिदिशा मुख्यविशेष्यताद्वयशून्यत्वादिनिवेशप्रकारः सुधीभिरूहनीय इति।

अत्रायं सङ्क्षेपः—यथा लक्षण्या सुपूजिता मूर्तिः प्रसादसुमुखी भवति, तथा भारतीयनीतिसम्मतमनुष्ठानं प्रमाणत्रयप्रमितफलसाधनं लघुसंस्कृतमबाधितमव्यभिचारी दृढं विघ्नैरनुच्छेद्यं राजदेवतागुरुप्रसादकरं विदग्धव्यवहारविषय उपदेशकरं क्रियाशक्तिसम्पन्नं सात्त्विकं शुक्लधर्मरुचिकरं भवतीत्यत्र न सन्देहः, तदेवाहुः—व्यवस्थितेत्यादिना।

## आर्यत्वम्

प्रसङ्गाद् आर्यत्वं विमृश्यते, तच्च जातिरूपम्। आर्या परदेशाद् भारते आगत्य अत्रत्यान् पददलितान् कृत्वा राज्यं स्वायत्तीचक्रुरिति केचिद् व्याचक्षते। आर्यो न जातिः; किन्तु स्वकर्माणि य आचरति, स आर्यः। आचार्या एवमाहुः—शाब्दिकैः आचरितुं योग्य आर्य इति व्युत्पत्तिमनुरुध्य स्वकर्माचरणशीलो आर्यपदार्थ इति निर्णीयते। तदुक्तम्—

कर्तव्यमाचरन् काममकर्तव्यमनाचरन्।
तिष्ठति प्राकृताचारं स तु आर्य इति स्मृतः॥ इति।

एवं शक्तिनिर्णये नियामकं व्यवहाराध्याय उक्तं स्मर्तव्यम्। एतन्मते पित्राज्ञां तिरस्कुर्वाणा ययातिपुत्रा इव विश्वामित्रपुत्रा अनार्येषु परिगणिताः। तथा च कुलीनत्वं युक्तकर्मानुरूपमार्यत्वं भवति। एतदेवाभिप्रेत्य नीतिसारे कुलसत्त्वदयादानधर्मसत्य-

कृतज्ञताष्टकगुणवत्वं तद्भवतीत्युक्तम् । किञ्च, भारतीयराजनीतौ तथाविधा एव आर्या अङ्कुशस्थाने राज्ञाऽनुमन्तव्याः, यतस्त एव सामाद्युपायं प्रयोक्तुं समर्था नासफलतां गच्छन्तीति निर्णीतम् । अत एव सन्दिग्धन्यायनिर्णये आर्यशासनमेव धर्मे प्रमाणत्वेन स्वीकुर्वन्ति आचार्याः । तेषां तथाविधानां निवासो भारत एव नान्यत्र, यत आर्यैरनुष्ठेयत्वेन अपेक्षिता यवमृगदर्भा गावः भारत एवोपलभ्यन्ते । वेदोऽपि भारत एवासीत्, यतो वर्णाश्रमस्थितिनिबन्धनमत्रैव विहितं चकास्ते । तं शब्दप्रमाणमाधारीकृत्य प्रवृत्तौ सत्यामेव वृत्तिनियमनं युद्धादिधारायां हर्षेण प्रवृत्तिः सहगमनं सर्वस्वत्यागो वैराग्यं मनसो निग्रहः प्रत्याहारश्च सुशक इति त्रयीमनुगच्छन्तीयं सर्वापि नीतिः सफलाऽभूत्, भविष्यति च । तथा सत्येव—

आत्मानं प्रथमं राजा विनयेनोपपादयेत् ।
ततोऽमात्यान् ततो भृत्यान् ततः पुत्रान् ततः प्रजाः ॥

इत्युक्तं सार्थं भवति । अत्र वार्तादण्डनीतिस्थापन उक्ते तत्र वेदमाधारीकृत्य प्रवृत्तानां जीवितस्य सुरक्षायै वार्ता प्रवर्तते । सा च कृषिपाशुपालवणिज्यात्मिका । सा च विन्दति प्राप्नोतीत्यर्थबोधकत्वाद्विद्या भवति । धर्माविरोधि विद्याभूम्याद्यर्थज्ञानभाव्यभावकभावनाकरणभूता जीवनहेतुः ।

### वार्तापूर्णता

नन्वेवं पराशरविदेहराजप्रोक्ता वार्ता नास्ति, कथं नीतिपूर्तिः स्यात् ? इति चेत्, अध्यक्षप्रचारेण वार्ता पूर्णा भवति, कामसूत्रकर्त्रा "वार्ता अध्यक्षप्रचारेणाभ्यसनीया" इत्युक्तत्वात् । तत्सम्प्रति वार्ताशास्त्रमध्यक्षप्रचारात्मकमर्थशास्त्रस्य द्वितीयाधिकरणं बोध्यम् । कृष्यादौ कर्तव्या रोगचिकित्सा नात्र निर्दिष्टा, तथापि शार्ङ्गधरविष्णुधर्मोत्तरपुराणाग्निपुराणेभ्यः सा पूरणीया । अनया धनधान्यसाफल्यदर्शनात् प्रजाया अनुरागस्तद्वशीकृतिश्च कोशदण्डाभ्यां सहजत एव भवतीति स्मर्तव्यम् ।

### दण्डनीतेर्नीत्यन्तरेण तुलना

परस्परमनुरागोत्पत्त्यशक्यत्वेऽपि वेदप्रामाण्याद्यभ्युपगमे परलोकविश्वासदार्ढ्येन नीत्यनुसरणे जनानुरञ्जनोत्पत्तिः सुशका, सत्त्वमूलाया दण्डनीतेर्दण्डप्रणयनशीलाया औचित्येनाकर्षणक्षमत्वस्वभावात् ।

किञ्च, शास्त्रलोकोभयानुगामिदण्डस्य तदननुगामिदण्डापेक्षयाऽन्तरं वक्ष्यमाणं बोध्यम् ।

१. "धनस्यापहर्ता दण्ड्यः, परं अपराधिनो धनापहर्ता राजा तु न दण्ड्यः" इत्यत्र शास्त्रनिर्णायकाभावे भारतीयेतरनीतौ विनिगमनायां विचार्यमाणायां बहुमतानु-

कूल्यमेव नियामकं वक्तव्यम् । तत्तु सदा एकस्वरूपं न, यतः स एव दण्ड्यो दण्डप्रणयनानन्तरं कृत्यपक्षीया भूत्वा प्रजायां स्वपक्षे बहुमतानुकूल्यं सम्पाद्य राजानमेव दण्डयितुं प्रवर्तेत । सोऽयं दोषो वेदमूलकदण्डनीतौ नास्ति ।

२. दण्डत्वेनापहर्तव्यं धनं कियत्परिमाणमिति प्रश्नोऽसमाहित एव वर्तते, नीत्यन्तरे न्यायान्याययोरननुगतत्वात् ।

३. यथा कथञ्चित् करादिरूपेण अपहर्ता शासकोऽपराधी न वेति निर्णेतुमितरनीतौ विनिगमना नास्ति, औचित्यस्याव्यवस्थितत्वात्, अनिर्णीतत्वाच्च ।

४. किञ्च, उत्तममध्यमाधमसाहसदण्डेषु कस्य कियान्दण्ड इत्यत्र नियामिका नीत्यन्तरे व्यक्तेरिच्छैव । अत्र तु न तथा, शास्त्रस्य नियामकत्वात् ।

५. इतरराजनीतौ दण्डे प्रणीतेऽपि अपराधान्निवृत्तिरशक्या । भारतीयनीतौ तु व्यवस्थेदृशी यत्प्रमादेन कृतायामपनीतौ सर्वोऽपि सुजनतोऽपराधमनुभवन् दण्डेऽप्रणीते ग्लानिमनुभवति, यतः स नरकाद् बिभेति । प्रायश्चित्तात्मकं दण्डं विधाय प्रसन्नमना न पुनरपराधे प्रवर्तेत इति भारतीयदण्डमाहात्म्यम् । यदि दुरात्मैव कश्चिद् भवति, तर्हि विद्वत्सु उपदेशकेषु सत्स्वपि दुरात्मनः शासनायात्र शासकत्वेन राजा गुरुभक्तः वृतः, स च त्रयीप्रामाण्यं स्वीकृत्य प्रवर्तते, तेन न जनक्षोभो दण्डप्रणयनञ्च सफल इत्यग्रे व्यक्तम् । एवं सति सर्वं सुस्थमन्यथा नेति ।

### विद्यान्तरापेक्षया दण्डनीतेः प्राधान्यमहत्त्वे

दण्डनीतिः रक्षणार्थं प्रवृत्ता आन्वीक्षिकीप्रभृतिनिसृणां विद्यानां योगक्षेमौ साधयति । ताश्चेमां पोषयन्तीति रक्षणकर्तृत्वाद् अस्याः प्राधान्यम् । अपि च राज्यस्य कण्टकेभ्यः परिरक्षणं भयनिवर्तनं धर्मार्थयोर्विवर्धनं अश्वमेधादौ गुणवति पुत्रे वा धनविनियोजनं कुर्वन्नयं दण्डः पारस्परिकविश्वासमुत्पाद्य लोकस्य निराबाधं जीवनं साधयति ।

स च दण्डस्त्रेधा—तीक्ष्णः, मृदुः, युक्तश्च । तत्र तीक्ष्णेन दण्डेन भयं प्रसरति प्रजायाम् । अत एव स उद्वेगकरः । ततः कृत्यपक्षोत्पत्तिः, अपरागश्च । मृदुस्तु दण्डोऽकिञ्चित्करः, यतो मृदुना दण्डेन राजैव परिभूयते अवमन्यते च । लोकशास्त्रानुमतो दण्डस्तु युक्त उच्यते, यतो उपायप्रकरणोक्तदिशा सामादीनां साधने तदात्मको दण्डः लोकशास्त्रानुमतो भवति । तेन प्रजाराज्ञोर्मध्ये प्रेम वर्धते ।

अत्रायं विशेषः—शास्त्रानुमतिमात्रेण लोकमतानुगतत्वाभावे भारतीया नीतिर्न दण्डं प्रणयति, नापि शास्त्रमतानुगतत्वाभावे । सर्वथा दुष्प्रणीतश्चेत्, स एव देशे कामं

सङ्गं क्रोधम्, अक्षमाम्, अज्ञानं मोहञ्चोत्पाद्य राजानं राज्यं च विनाशयति। तदुक्तम्–"अज्ञानाद् वानप्रस्थानपि कोपयति किमङ्ग पुनर्गृहस्थान्" इति। सर्वथा अप्रणीतश्चेद्दण्डो मात्स्यन्यायमुद्भाव्य पुनरपि राज्यविनाशमेव सम्पादयति। अतो युक्तदण्डः प्रशस्यते। एतेन धर्मशास्त्र-न्यायशास्त्रयोरध्ययनस्य सार्थक्यं भवति। अन्यथा विवेकाभावे धर्मशास्त्रापरिचये च युक्तदण्डता व्याहन्येत।

## नीतौ विद्युत्साधर्म्यम्

नीतेः क्रियारूपत्वाद् आकर्षकत्वं क्षेपकत्वं विवेचकत्वञ्च विद्युद्वत् स्मर्तव्यम्। क्षेपकत्वं प्रलये परमाणुषु सिद्धम्। यतस्तदानीं परमाणुषु तथा क्रिया सम्भवति, यथा ते न संयुक्ता भवन्ति। सृष्टौ तु आकर्षकत्ववत्क्रिययैव आकृष्टाः सन्तः परमाणवः संयुज्यन्ते। ततो जगदिति क्रियायामाकर्षकत्वस्य विक्षेपकत्वस्य च भावात् तस्या विद्युत्यन्तर्भावोऽभिधीयते। केचित्तु परमाण्वादौ उत्पन्नो वेगः क्रियां विदधातीति वेग एव विद्युत्। गुरुत्वाकर्षणं प्रतिभोत्पादनमूर्जा च 'इनर्जी' इत्युच्यते आधुनिकैः। प्राचीनैस्तु अदृष्टमुच्यते। भारतीया राजनीतिराकर्षणक्षमा सफला प्रमाणत्रयप्रमिता लोकरञ्जनार्हा विद्युदेव। इतरा तु नीतिः पर्यन्ते अफला प्रमाणत्रयविरुद्धत्वात् परित्याज्या भवति।

## नीतिशास्त्रं दृष्टादृष्टशास्त्रम्

इदञ्च नीतिशास्त्रं आयुर्वेदवद् दृष्टे अथर्जने प्रमाणं सद् धर्मशास्त्रसममदृष्टानुबन्धि, यतो लोकयात्राहेतुत्वाद् वर्णाश्रमान् धर्मे नीतौ च व्यवस्थापयत् लोकं स्वधर्मकर्मणि जातिव्यवस्थायां च प्रेरयति विश्वासञ्चोत्पादयति।

## भारतीयनीतौ जातिव्यवस्थापनं बहिष्करणञ्च

ननु एषा नीतिर्वर्णाश्रमधर्माच्च्युतान् बहिष्करोति इत्ययं महान् दोषो राज्यविनाशाय कथं न प्रभवेत्? इति चेत्, न, यत्र वर्णाश्रमधर्मो नास्ति, तत्र समाजाद् भेदो नापगच्छति, प्रत्युत उत्तरोत्तरं वर्धिष्णुरेव सः, इति भेदकारणमन्यदेव स्वीकर्तव्यम्। तच्च शङ्काजननमभिभर्त्सनं च सम्भवतीत्युक्तम्। तत्र भारतीयराजनीतौ वेदप्रामाण्यस्य प्राधान्येन परिग्रहाद् अभिभर्त्सनं न सम्भवति। किं बहुना, स्वस्वकार्यकलापानुरूपव्यक्तिमात्रस्य स्वीयकर्मोचितजातौ सन्निवेशनमेवानुमन्यते। यथा प्रव्रज्याप्रत्यवसितस्य चरकर्मणि नियोगः। ततः पार्थक्येन स्थापितः परिव्राडपि। सोऽपि पूज्य एव। अनयोरुभयोरपि वेदप्रामाण्यपरिग्रहात् स्वधर्मे प्रवर्तनाच्च न कलहः। अत एव वेश्यापतिव्रताचरित्रे उभे अपि देशे अपेक्ष्येते। नास्ति अनयोः कलहः, पृथगवस्थानात्। एवं सर्वत्र बोध्यम्।

किञ्च, भारतीयसमाजे जातिबहिष्कारोऽपि कीदृग्विध इत्यपि उदाह्रियते। तथाहि—कश्चिद्यदा जातिसङ्घटनभावानुरूपं यादृक्कर्म कुर्वन् मर्यादामतिक्रम्य प्रवर्तते,

सुखमनुभवति च, तदा तादृक्कर्म यज्जातौ समाजे वा प्रवर्तते नैसर्गिकम्, तत्र समाजे जातौ वा स विकृतकर्मा जनः शास्त्रेण समादिश्यते। अथवा तथाविधकर्मानुष्ठाता स्वजातितः कुष्ठिवत् पृथक् स्थाप्यते। न तु कलहमुत्पाद्याभिभर्त्स्यते। तथा पृथक्तया उत्तमसन्तानलाभार्थं शुद्धा जातिरपि संस्थाप्यते, स्वानुरूपकार्यार्थं सा प्रोत्साह्यते च। एवञ्च समाजे सङ्करजातीनामपि जीवनं सुलभमभूत्। अतोऽत्र बहिष्कारस्य प्राधान्यं नास्ति; किन्तु तन्मुखेन सम्पूर्णजातिरक्षणस्य प्राधान्यम्।

अपि च राजनीतौ मन्त्रिनिर्वाचने जातीयानां मतमपि पृथक्तया निर्वाचकत्वेन स्वीक्रियते। तस्यैव फलं यन्मन्त्री यद्यपराध्यति, तर्हि राज्ञा तन्निर्वाचिका जातिर्दण्ड्यते, जात्या अपराधीति रीत्या अपराधकर्तृषु मन्त्रिषु दण्डप्रणयनं सुलभमत्र यथा, तथा नान्यत्र। किञ्च, तत्तज्जातीयेषु कर्मसु तत्तज्जातीयानां सन्निवेशनाद्धनवितरणव्यवस्था-सौलभ्यमित्यपि प्राक् प्रदर्शितमेव। तदिदं "शान्ति का अग्रदूत" ग्रन्थे विस्तरेण विवेचितमस्माभिः।

एतादृशेषु स्थलविशेषेषु अपराधी न यथोचितं दण्ड्यते, तर्हि उच्छृङ्खलताऽपरिहार्या स्यात्, अतो भारतीया नीतिर्जातिद्वारा बहिष्कारमुखेनोपेक्षादण्डं विदधाति। ततोऽपराधिषु अकर्मकरणप्रयुक्तां ग्लानिमुत्पाद्य प्रायश्चित्ते प्रेरयति, स च दण्डो जातिद्वारा प्रणीतोऽन्यया राजनीत्या। अत्रायं विशेषो यदियं राजानं दण्डप्रणेतृत्वेन तथाविध-स्थलेषु न मनुते, तत्र कारणं दण्डप्रणयने सारल्यमेव। यतो हि जातिर्दण्डयितुमपराधिनं प्रति यथा सुशका, न तथा शासनाधिकारिणो मन्त्र्यादीन् अकर्मणो निवर्तनार्थम्। तदुपेक्षाफलमिदमेव जातिमर्यादा-विलोपात् साङ्कर्यात् समाजे उद्धततोच्छृङ्खलता चापरिहार्ये भवतः। तत्र आहारमातृपितृकर्मान्यतमाशुचित्वमपरिहार्यम्। यच्चाशङ्क्यते जातिनियमनात् सङ्ख्याह्रासेन प्रजा दुर्बला स्यात्? इत्यपि न, यतः पृथगवस्थापन-मात्रेण जातिशून्यत्वन्न भवति; किन्तु प्रायश्चित्तानधिकारित्वे धर्मानुष्ठानाधिकाराद्धीनतैव। अत्रोदाहरणं कुष्ठिनः पृथगवस्थापनम्। अत्रेदं तत्त्वम्—संस्काराधायकस्य प्रतिभोत्पादकस्य शुचित्वस्योपेक्षायां दासकर्मैव जीविकोपाय इति जानानः स्वातन्त्र्येणात्मानं रक्षितुमसमर्था भवन्ति। तथा सति जाड्यं पशुत्वसूचकमेव समाजे सम्पत्स्यते, भूतिकर्मानुपलब्धौ तु समाजस्य परलोकप्रयाणमेव हस्तगतं भवेद् भारतीय-राजनीत्यभावे। तस्मादेतन्नीतौ बहिष्कारो न भेदजनकः; किन्तु रक्षकः।

### दण्डनीतिप्रयोजनं सङ्क्षेपेण

उक्तदोषनिर्हरणायेयं दण्डनीतिरुपस्थिता वर्तते, तया आन्वीक्षिक्यादिविद्याः संरक्ष्यन्ते। विना तत्प्रणयनं मात्स्यन्यायेनाभिभवो भवतीत्युक्तं प्राक्। तस्यापि मूलं विनयं शास्त्रकारा व्याचक्षते। स च सत्त्वसहचारी। अन्यथा दम्भोत्पत्त्यापत्तिः स्यात्। सत्त्वमुक्तमेव। विनयः श्रोत्रादीनां स्वेषु स्वेषु विषयेषु अविप्रतिपत्तिरिति वक्ष्यते।

तस्याः पर्यवसानं शास्त्रार्थानुष्ठाने वर्तते । अतः शास्त्रार्थानुष्ठाने आर्यमर्यादा अपेक्ष्यते । सा च मदमानाभाव एवेत्यादि विस्तरेण प्रपञ्चितम् ।

### विद्यावृद्धसंयोगविनययोः पौर्वापर्यम्

नीतिसारे आदौ जितेन्द्रियत्वं ततो वृद्धसंयोगस्ततो विद्येति क्रमेऽभिहिते विनयः स्वाभाविको जन्मान्तरीयपुण्यसञ्चयप्राप्तः । अत्र तु विद्यावृद्धसंयोगानन्तरं विनयस्य प्राप्तिरुच्यते । सोऽयं विनयः कृतको बोध्यः ।

### गुरुसेवाविद्ययोः सम्बन्धो राज्येन सह

अत्रेदं चिन्त्यम्—साहित्यशास्त्र उक्तेषु षट्त्रिंशद्व्यभिचारभावेषु धृतिभाव एवाद्भुतरसनिर्माणद्वारा प्रजानुरागजनको राज्ञा स्वायत्तीकरणीय इति सिद्धान्तितम् । तल्लाभाय जितेन्द्रियत्वमौचित्याधायकत्वात्स्मर्तव्यं भवति । तथा सति सामाजिकमनसामाकर्षणं भवति ।

एतदनुभावप्रभावेण पुरुषो मानोरथिकमपि सुखमनुभवति, वर्तमानवस्तुविषयकेच्छायामेवावस्थानात्, अत्रैव सन्माननसम्भवाच्च । अपि च प्रियाप्रियाविकारित्वमपि धृत्यनुभावान्तर्गतमेवेत्युभयमपि शास्त्रगुरुद्वयभक्तिमत्त्व एव । अन्यथा धृतिभावस्य अनुदय एव स्मर्तव्यः । धृतिभावं विद्याभावं च उपेक्ष्य सेवया मान्यत्वं येन अर्ज्यते, तत्र रौद्रस्य सङ्क्रमणाद् अनुरञ्जनमसम्भवि । ईश्वरगुरुभक्त्या तु अर्थप्रकाशोत्पत्तेर्विशेषदर्शनं मोहापसारकं स्वतःसिद्धम् । यत्रेयं धृतिस्तं प्रति जनतायां विश्वासस्तेनाकर्षणं तेन सङ्घटनम्, इत्येवं क्रमेण राज्यस्थापने गुरुभक्तिः, विद्या च अनुपेक्ष्यैव । ये किल विद्यावत्सु अलक्ष्मीं दृष्ट्वा धृतिं गुरुभक्तिं चोपेक्षन्ते जन्मान्तरवशात् प्रतिभामभिलषन्ति च, ते तु एवं वक्तव्या यत् केवलं कवित्वेन जन्मान्तरार्जितपुण्यसहकृतेन किं प्राप्नुमः, यदि शक्तिर्न लभ्यते । तदुत्पत्तये तु काव्यावेक्षणादीनां सहकारित्वमपेक्षितमेवेत्युक्तम् । तदुक्तं शक्तिर्निपुणतेत्यादिग्रन्थेन । अत एव पौरुषकर्मणस्त्यागो न शास्त्रसम्मतः । पौरुषेण गुरुभक्त्यादिना प्रतिभा धृतिश्च भवतः, अतो गुरुभिर्विद्यायोगो यदि सम्पादनीयः, तर्ह्यस्या अनन्यथासिद्धत्वमेव । वस्तुतस्तु जन्मान्तरेऽपि कविना शास्त्राभ्यासो गुरुकृपा च सम्पादितैवेति जन्मान्तरार्जितपुण्यस्थलेऽपि अनयोरनन्यथासिद्धत्वं मन्तव्यम् ।

### द्रव्याद्रव्यद्रव्याद्रव्याणि

एतत्प्रसङ्गाद् द्रव्याद्रव्यद्रव्याद्रव्याण्युच्यन्ते । स्वाभाविकेन विनयेन क्रिया सम्भवति । सा च विद्योपदेशः । तत्क्रियावान् गुणवांश्च द्रव्यं सत्त्वबुद्धिगुणसम्पन्न इत्यर्थः । विद्यया गुणेन चासम्पन्नोऽद्रव्यम् । यत्र सहजगुणाः सहजदोषाश्च, स द्रव्याद्रव्यम् । यो द्रव्यं स शुश्रूषाद्यष्टविधेन बुद्धिगुणेन सम्पन्नो भवति ।

## बुद्धिगुणाः

अथ बुद्धिगुणा व्याख्यायन्ते। श्रोतुमिच्छा शुश्रूषा, एतेन प्रहसनव्यावृत्तिः। श्रावणमासे वा तया भक्तिलाभः। सा च शुचित्वादिगुणसहचरिता विवक्षिता। यद्यपि श्रवणमर्थस्य न सम्भवति, तस्य श्रवणकर्मत्वाभावात्, तथापि अर्थज्ञानानुकूलव्यापारस्य श्रवणपदार्थत्वे नायं दोष इदमित्थमेवेत्याकारकः, तद्वति तत्प्रकारकनिश्चयो ग्रहणम्। अविस्मरणं धारणम्। विवेकज्ञानं विज्ञानम्। विवेकश्च शास्त्रनिर्दिष्टविधिविषयको बोध्यः। ऊहो विधिविषयस्तर्कः, अपोहो निषेधविषयकः। अथवा प्रमाणप्रमेयविषयकौ तौ क्रमेण बोध्यौ। तत्त्वाभिनिविष्टा बुद्धिरिष्टसाधनमित्याकारकं तत्त्वज्ञानम्। सा च उत्साहसत्त्वप्रचुरा चेत्, सफलैव। तत्राप्रामाण्यज्ञानानास्कन्दितत्वमपेक्ष्यते। बुद्धौ अष्टविधगुणवत्यां सत्यां विद्या पूर्णा भवति। सा च आन्वीक्षिक्यादिका चतुर्विधाऽपि ज्ञानाविद्यापदेन व्यपदिश्यते। अपराः कर्मविद्या उच्यन्ते। यद्यपि विद्यायामनेके विषय उपलभ्यन्ते, तथापि तेषु गुरुणा यदुक्तं करणीयं वर्जनीयं वा तर्कशुद्धं तत्पालने द्रव्यत्वं भवति। तत्सम्पत्तौ विनयः।

अथ साहजिककृतकविनयावुच्येते। अनधीतविद्या अपि ये अनात्मगुणसम्पन्नं न स्वामित्वेन अनुमन्वते; किन्त्वात्मगुणसम्पन्नं तेषु स्वाभाविको विनयो मन्तव्यः। ये विद्यामधीत्य स्थैर्यप्रतिपत्त्यसम्मोहान् प्राप्य आत्मनः स्वातन्त्र्यं रक्षन्ति, तेषु कृतको विनयः। ये तु विद्यामधीत्यापि परतन्त्रतां भजन्ते, ते जडा एव कथं स्वातन्त्र्यं रक्षेयुः।

किञ्च, स्वतन्त्रतारक्षणार्थं सरस्वती शिष्यैरुपास्यते। तत्कृपया गुरुद्वारा येन बोधानुकूलं श्रवणमुपलब्धं सैव श्रवणभक्तिः। "सरस्वती उपासिता चेत् परमेश्वरः प्रसीदति, स सखा प्रसन्नश्चेत् किं दुर्लभम्"। इत्येवं यस्या संस्कारो जन्मत उपलब्धः, स सहजविनीतः। विद्योपासकेषु विघ्ना दृश्यन्ते, परं तद्दर्शनं विदुषामेकाग्रताप्रकाशनायैव, न तु विनाशाय मन्तव्यम्। उपर्युक्तः सोऽयं संस्कार ईशप्रसादानुबन्धी कुलीनेषु नासुलभः, तत्र प्रतिबन्धकापसरणमेव कर्तव्यं भवति, 'क्रिया हि द्रव्यं विनयति' इत्युक्तत्वात्। कुलीनत्वाभावे साहजिकविनयसम्पादने परिश्रमो महान् तथा साफल्यसंशयश्च अभिनिवेशानुदयात्। किञ्च, यत्र न कुलीनता, तत्र परदारपरद्रव्यस्पृहा दृश्यते। एवंविधः शुश्रूषादावनधिकारो सोऽद्रव्यः। अतः कुलीनत्वं हेतुतया चिन्तितम्। यस्य शरीरे कुलीनत्वप्रयुक्तोऽभिनिवेशः, स एव विपत्तिषु स्वकर्तव्यमद्रूयमानेन चेतसा अनुतिष्ठति। एवञ्च विद्याविनयसम्पन्नो बुद्धिमान् द्रव्यम्। यश्च विद्वान् तथापि अविनीतः, स द्रव्याद्रव्यम्। विद्ययापि हीनः सो अद्रव्यम्। अपि च द्रव्येष्वपि बुद्धेरष्टगुणेषु अभिहितेनार्थज्ञानगुणेन साध्यसाधनतावच्छेदकविषयकेन सम्पन्नो लक्ष्यलक्षणोभयज्ञ उत्तमो भवति। लक्ष्यमात्रज्ञो मध्यमः। लक्षणमात्रज्ञः शक्तिहीनोऽधमः। किञ्च, यस्य मिथ्याभिनिवेशो नास्ति, कृतिसाध्यवदनिष्टाननुबन्धि हितसाधनं

यत्कर्तव्यं तत्र सोत्साहा बुद्धिश्च वर्तते, स बुद्धिमान्। अन्यस्तु दुर्बुद्धिरेव। बुद्धिमानेव मतिमानिति मन्यते।

### शास्त्रज्ञानार्थं विनयापेक्षा

शास्त्रज्ञानाय स्वाभाविको विनयोऽपेक्ष्यत इत्युक्तं तत् किमर्थम् ? इति चेदुच्यते- विनयाभावे मदस्य मानस्य च सत्ताऽपेक्ष्यत इत्येव वक्तव्यं स्यात्। सति च मदे संस्कारो विनष्टो भवति। तथासति प्रत्यभिज्ञाप्यनुपपन्ना स्यात्। मदस्य संस्कार-नाशकत्वं वैशेषिकभाष्ये व्यक्तम्। नामदस्य: संस्कारोऽयं स्थायी बोध्यः। मुक्तावल्यां तु कालरोगयोरेव यन्नाशकत्वमभिहितं तन्नाशप्रतियोगी संस्कारो व्यभिचारी बोद्ध्यः। तदिदं संस्कारोद्बोधस्मृत्योः कार्यकारणभावविवेचनानन्तरं स्फुटीभवेदिति चिन्त्यते। तथा हि—विषयाणां तापकानां प्रतियोगिविधया चिन्तायामुत्कटायां चित्तं द्रवति। तत्र प्रविष्टं द्रव्यं संस्काररूपतां प्राप्नोति। तादृशावस्थापन्नं द्रव्यं चित्तस्य काठिन्येऽपि न ततोऽपसरति। चित्ते योऽयं द्रव्यस्य प्रवेशः, स एव दृढः संस्कारोद्बोधः। अद्रवा-वस्थायां प्रविष्टं तु द्रव्यं न दृढसंस्कारभावं भजते। नापि स्थायिनीं स्मृतिं सम्पादयति, संस्कारस्य व्यभिचारित्वात्। इत्येवंरीत्या संस्काराणां स्थायित्वं व्यभिचारित्वञ्च बोध्यम्। इत्थञ्च विनयाभावे मदस्य सिद्धौ संस्कारनाशाद् विद्योत्पत्तिर्न स्यात्। स्याच्च मूढताया वज्रलेपः। अतो विनयो मदासहचरितः शास्त्रज्ञानजसंस्काराणां स्थायित्व-सम्पत्तये अपेक्ष्यते। ननु हितोपदेशादौ विष्णुगुप्तेन राजपुत्रा विनयात्पूर्वमेव बोधिता इतीतिहासः कथं सङ्गच्छते ? इति चेत्, न, नीतिमधिकृत्य कृतो बोधः पुत्राणां नीतौ रुचेरुत्पादनार्थमेव स स्मर्तव्य इति ध्येयम्।

### दण्डविद्यान्यतरयोर्विनयसाधनत्वम्

ननु दण्डस्य विनयसाधनत्वमत्रोच्यते। अग्रे तु विद्यायां तत्साधनत्वं प्रतिपाद-यिष्यत इति विरोधः ? इति चेत्, न, क्वचिद् दण्डस्य विनयसाधनत्वं बाल्यावस्थायां दण्डभयाद् विनयसम्पादनार्थम्। तदनन्तरं तु राजपुत्रो विद्यया विनेय इति नात्र विरोधः। न च दण्डेन विनीयते शिष्यस्तर्हि गुरुं स द्विष्येदिति वाच्यम्, धर्मतत्त्व-बोधानन्तरं गुरुद्वेषस्य विलयसम्भवात्।

साम्प्रतं तत्त्वाभिनिवेशपूर्वकं प्रतिभोत्पादनाय कारणभूतकुलीनत्वस्य सत्त्वेऽपि गुणवती प्रजा न दृश्यते कुलेषु। तत्र कारणं तथाविधशिक्षाक्रमाभावः। तत्रोक्तः शिक्षाक्रमः प्रचारणीयः। अनेन सह अदृष्टोत्पादनार्थं विद्याव्रतमपि अनुसन्धेयतामर्हति।

### शिक्षार्थं संस्कारः

अत्रायं निष्कर्षः—राजनीतौ पुत्रश्चौलेन संस्कृतः कर्तव्यो वंशानुरूपम्। तदा लिपिः सङ्ख्यानं च तेन ज्ञातव्ये। ततो वर्णाधिकारभेदेन कामनापरतया वा वर्णक्रमेण ८-११-१२ वर्षे तस्य उपनयनम्। ततस्त्रय्यध्ययनमान्वीक्षिक्यध्ययनं च शिष्टेभ्यः।

शिष्टत्वञ्च इष्टसाधनतांशे भ्रान्तिरहितत्वे सति वेदप्रामाण्याभ्युपगन्तृत्वं मथुरानाथै-र्व्याख्यातम्। प्रकृते तु धर्मनिर्णये तत्र तत्राधिकृतत्वमपि विशेषणं बोध्यम्। वार्त्ताऽध्यक्षेभ्योऽध्येया। दण्डनीतिर्व्युत्पत्तिशक्तिमद्भ्योऽध्येया। अध्यापयितुर्विशेष-संज्ञाकरणं पृथक्संज्ञाप्रदर्शनार्थम्। तेन सर्वेषां शिष्टमव्याहतमेव।

अत्रेदमवधेयम्—ननु गणितज्ञानानन्तरं काव्यज्ञानार्थं छन्दोभाषाज्ञानमपेक्ष्यत इत्यपि प्रपञ्चितम्। तस्य क उपयोगः? इति चेदेवम्—छन्दोभाषासंस्कारो यदि बालकस्य हृदि आदितो भवेत्, तर्हि काव्यास्वादो भवेदिति। तदेतत् काव्यप्रकाश-विवरणे विवृतं तत्र द्रष्टव्यम्।

## शिक्षाक्रमः

विद्या हि मातेव रक्षति। सा सर्वेषु धनेषु प्रधानं धनमिति सा नोपेक्षणीयता-मर्हति। तत्रापि अर्जनं एकदेशविद्याया उपहासाय भवतीति समस्तविद्यातात्पर्यं मनीषिभिः चिन्तनीयं वस्तु। अतः अष्टादशविद्यास्थानानि लोकरञ्जनकार्ये अधिकृतैरवश्यं ज्ञेयानि। तथा सत्येव सर्वविधोचितरञ्जककार्यशक्तेरुदयसम्भव इति तत्सम्पादनाय ज्ञानार्जने मूलभूतस्य विद्याध्ययनस्य क्रमोऽवश्यं चिन्तनीयः। तत्र हेतुत्वेन प्रथमतः शास्त्रेषु गुरुभक्तिरेव निर्दिष्टा। यतो विवेकसहितया तया प्रिया-प्रियाविकारित्वोचितकारित्वादीनां गुणानां प्रादुर्भावोऽपि आञ्जस्येन सुलभः। इत्येत-दालोच्य सेतुबन्धे विद्याध्ययनक्रमो निर्दिष्टः। तस्यायं निर्गलितोऽर्थो यत् क्रीडाऽधि-कारान्निवृत्तः सौवर्णिकः अक्षराभ्यासं छन्दोभाषाभ्यासं कुर्यात्। ततः शुङ्गेनात्मान-मन्विच्छेदिति विधानात् "शुङ्गमवयवसमुदायात्मको न्यायः" इति व्याख्यानाद् न्यायशास्त्रमधीयीत। ततः पूर्वमीमांसा तत उत्तरमीमांसेति। कौटलीयशास्त्रस्याप्ययं निष्कर्षो यदादौ अक्षराभ्यासः, काव्यज्ञानार्थं शब्दरूपावलिः, अष्टाध्यायी अक्षरोच्चारणार्था। तत उपनयनम्, काव्याध्ययनम्, ततो न्यायादिशास्त्राध्ययनम्। तदेतद् ग्रहणान्तिकमध्ययनं पुत्रस्य षोडशवर्षाधिके समये यथा भवेत्तथा कर्तव्यमिति।

अथ अवस्थाभेदेन स एव पाठ्यक्रमः चिन्त्यते। पञ्चमवर्षे यथाकुलाचारं चौलम्। पञ्चमादारभ्य अष्टमाब्दं यावद् उपनयनं विहितं यथाधिकारं कामनां वाऽनुसन्धाय। अष्टमाद् आरभ्य द्वादशवर्षपर्यन्तं विद्याधिकारिता ऊहिताऽस्ति। तदनुकूलाया बुद्धिशक्तेः आपञ्चमाद् द्वादशवर्षान्तं विकासो भवति। ततः षोडशवर्षपर्यन्तं ब्रह्मचारिणा विद्यार्थः परिचेतव्यो भवति। एवञ्च तृतीयवर्षात्मिकावस्थातः अष्टमवत्सरान्ते-कावस्था, ततो द्वादशवर्षान्तावस्था, ततः षोडशवर्षान्ता। इत्यादृत्य बालस्य तिस्रोऽवस्था विद्याध्ययनाय विहिता भवन्ति। एतास्वेवावस्थासु भारतीयशास्त्रेण पुत्रस्य षोडशवर्षाभ्यन्तरे विद्याया ग्रहणकालो निर्दिष्टः। विशेषतो विद्यावृद्धसंयोगस्तु आन्तमावश्यकः। अत्रेदं चिन्त्यम्—ग्रहणं हि श्रुतानामर्थानामवधारणं निष्कम्पप्रवृत्त्यङ्ग-

मिति प्रामाण्यवादे साधितम्, तच्च तर्कशास्त्राध्ययनेन सम्भवतीति तदध्ययनस्य प्रधानतमत्वमत्र व्यवस्थाप्यते।

किञ्च, षोडशवर्षाधिकसमयपर्यन्तमुत्तमसंस्काराणामाधानाय विद्यासञ्चये अभिभावकैर्विपरीतजनसंसर्गात् पुत्रः संरक्षणीयः, शिक्षणीयश्च। धर्मज्ञजनानाम्, वणिजाम्, अध्यक्षाणां च संसर्गेण कर्तव्याकर्तव्ये अर्जनं च पुत्रेण ज्ञातव्यानि भवेयुः। अत एव कामसूत्रनिर्देशानुसारेण अनुकरणाधीनं लिप्याद्यध्ययनमुपनीतावस्थायां शास्त्रेण नियमितम्। अतः पञ्चमवर्षावस्थायामेव लिपिसङ्ख्ये भाषा-काव्याध्ययनं सर्वमेतत् क्रीडनकाल एव चित्राभिनयाभ्यां सम्पादितञ्चेद्रुचिकरं भवति। उपनयनानन्तरं तु चतसृणां विद्यानामध्ययनं कर्तव्यं भवति। एतत्समयः सप्तमवर्षानन्तरभावी वर्तते। इत आरभ्य एकादशवर्षपर्यन्तमुत्सुकता अनुकरणञ्च स्वाभाविकं दृश्यते। एकादशवर्षानन्तरं तु काव्याध्ययनजनिता पठनरुचिः समुत्पद्यते। एतावत्पर्यन्तं पटुप्रत्ययजः संस्कारो गुरुगृहं प्रति गन्तुं प्रेरयति, ततो विनयपूर्वकमध्ययनम्। अत्र आदरप्रत्ययजः संस्कार उत्पद्यते। मोहाद्यपसारणार्थमर्थशास्त्रोक्त्या द्वितीयाध्यायसम्बन्धिन्या—

विभावितः प्रमाणेन कथाभिरनुभावितः।<br>
तर्कः सञ्चारितश्चायं रसो लोके सुखावहः॥

इति रसमहार्णवोक्त्या च सहिष्णुता-सुहृद्भाव-सहचारितर्कस्याध्ययनमभ्यर्हितम्। तर्कमाहात्म्यं ज्ञात्वैव मानसरामायणे "वन्दौं गुरु पद पङ्कज" इति मङ्गलाचरणे तर्कदेवतैव नमस्कृता। तर्काध्ययनसमये अभिभावकैः क्रीडनादिषु बालकानां रुचिर्नोत्पादनीया। यतस्तत्र प्रियं भवति हितं तु न साध्यते। तत्तु क्लेशसहिष्णुतात्मकं वीररसे प्रवर्तने सति भवति यदि तत् सम्भवति, तर्हि सम्पन्नमिति वक्तुं शक्यते। तदर्थं तर्ककर्कशविचारचातुरी अभ्यर्हिता। तदभावे श्रद्धाया ह्रासोऽनुद्गमो वा दृष्टः। अतो विचारविकासे चिन्ता विधेया। तदनुकूलावस्था द्वादशवर्षानन्तरं वर्तते। ततः पूर्वमनुकरणप्रवृत्तिमाश्रित्यैव प्रयत्नः कर्तव्यः। अतोऽत्र अभिभावकैः पित्रादिभिः सावधानैर्भाव्यम्। अन्यथा गुरुं प्रति भयलज्जाप्रभवावहित्थायाः सम्भवात् पुत्रो गुरुं न समुपगच्छेत्। मातृपितृप्रेरणया गुरुं प्रति श्रद्धा समुदेति। गुरुसमीपे उपवेश्य षोडशवर्षपर्यन्तं पुत्रेणाध्ययनसमये ग्रहणमवधारणमिदमित्थमिति साधनीयम्। तच्च प्रमाणशास्त्रेण। तच्च गुरुणा सह संवादेन साध्यते। यतस्तत्र जल्पकथया वीरस्याद्भुतस्य च सिद्धिर्भवति। ततो गृहस्थाश्रमो दारकर्म। गोधनं ततः प्राक्। विद्यावृद्धसंयोगस्तु नित्यम्। एतदनुसारेण पाठ्यक्रमः ४२४ पृष्ठे निर्णीतोऽवधेयः।

## उपनयने वर्षभेदः

नन्वेवं विप्रादीनां वर्षभेदेन उक्ताया उपनयनस्य व्यवस्थायाः किं प्रयोजनम्? इति चेत्, न, तेषां जीवनव्यवस्थाभेदस्य संस्कारानुरोधेन विधानात्। यथा ब्राह्मणः

शान्तरसेन जीवति, तेन सत्यमनुष्ठेयम्। क्षत्रियो वीररसेन, तेन शस्त्रेण जीव्यते। क्षत्रियो यद्यष्टवर्षादेव कामचारान्निवर्तेत, तर्हि युद्धानुरूपं बलाधानं तत्र न भवेत्, तदर्थमेकादशवर्षपर्यन्तं तस्य कामचारत्वं स्थापितम्। वैश्यस्तु वार्तया जीवति। तेनानृतं वक्तव्यं भवति। 'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्' इत्युक्त्या अनृतभाषणस्य दार्ढ्याय षोडशवर्षपर्यन्तं तस्य कामचारत्वमुक्तम्। पुनः अनृतभाषणस्य निरङ्कुशस्य व्यावृत्त्यै उपनयनमपि विहितम्। कामनापरतया यदि क्षत्रियः षष्ठे वर्षे उपनीयते, तर्ह्यपि तेन बलाधानाविरोधेनैव उपनयनव्रतान्यनुष्ठेयानि, बलाधानस्य मुख्यत्वात्।

## षोडशवर्षावधेः पूर्वमध्ययनविधिप्रयोजनम्

विद्याध्ययनं षोडशवर्षात्पूर्वमभिहितम्, तत्र कारणं कामिनीजिज्ञासाया अभावेन धर्मार्थज्ञानस्य आञ्जस्येन समुत्पादयितुं शक्यत्वम्। षोडशे वर्षे विवाहेन उक्तविषयप्रवृत्त्या अध्ययनेच्छा दुर्बला भवति। षोडशतमे वयसि विवाहविधिकरणं षोडशात् प्रागेव वेदाध्ययनस्य वृत्तत्वात्। विवाहाभावे अनाश्रमित्वप्रसक्तिर्मन्तव्या। विवाहे सम्पन्ने तु मध्वादिसेवनं भवितुमर्हति। ईप्सितफलप्राप्त्या पुत्रोऽपि पितरं मित्रभावेन व्यवहर्तुं शक्नोति। अध्येतुं च उत्साही स्यात्। षोडशे वयसि विवाहे वृत्तेऽपि तदानीं कन्याऽरजस्कैव षट्सप्तान्यतरवयस्का भवितुमर्हति। तस्या रक्षणमभिभावकैः श्वशुरादिभिराप्तैः क्रियते, तर्हि नातिप्रसङ्गः स्यात्। बालकयोर्विवाहे ब्रह्मचर्यहान्यादिभिया विवाह एव न कार्य इति मतन्त्वसाधु। शेषं विवाहविचारे प्राग्व्यक्तमेव।

## आन्वीक्षिकीत्रय्योः वार्तानीत्योश्चान्तरम्

आन्वीक्षिक्यादि समस्ता विद्या ज्ञानविद्या इत्युक्तम्। अत्र हेतुर्बाल्ये विषयस्पृहा नास्ति। एवं सत्त्वेऽपि वार्ताराजनीतिविद्ययोः आन्वीक्षिकीत्रय्यपेक्षया स्थितमन्तरं जयमङ्गलाकृता "कर्तव्यप्रयोजनम्" इति वाक्येनोच्यते। तस्यायं भावः--आन्वीक्षिकी विचारं निरूपयन्ती तत्रैव विश्राम्यति। त्रयी नित्यकर्मानुष्ठानस्य विधायिका, तस्य सम्पत्तये सर्वाणि विहितानि अङ्गानि सदाऽऽवश्यकानीति न, यतः सा "आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी" इति न्यायं अनुसरति। वार्तानीतिविद्ये तु नैवम्, यतो यावत्पर्यन्तं सर्वाण्यङ्गानि न अनुष्ठीयन्ते यथावत्, तावत् तयोः साफल्यं न स्यात्। प्रत्युत प्रमादेन देशस्यैव हानिः स्यादिति बाल्यकाले कर्तव्यविधया ते ज्ञाते सत्या तारुण्येऽनुष्ठानपर्यवसायिन्यौ सफले भवत इति वार्तानीतिविद्ययोः आन्वीक्षिकीत्रय्यपेक्षया विशेषः स्मर्तव्यः।

नीतिवैलक्षण्यं तु तदपेक्षया नितराम्। यतः प्रतिव्यवहारं प्रतिपदं राजनीतिः ऊहनीया नवीना भवति। यतः पूर्वं निर्णीतो नीत्यर्थ उत्तरक्षणे निमित्तनाशनिमित्तोत्पत्तिभ्यां बाध्यते, अन्यश्चाभ्यूह्यते, अत्रापच्छेदन्यायो मीमांसकैरुक्तो ध्येयः।

अत एव नीतेश्चपलत्वमभिधीयते कोविदैः। तज्ज्ञानार्थं राज्ञा एकाग्रेण सदा भाव्य-मिति नीतिविदामाग्रहः। एवंविधस्य कल्पितस्य नीतिप्रयोगभेदस्य नाधर्मत्वम्, न्याय-प्राप्तत्वात्।

अत्रेदं बोध्यम्—अपच्छेदन्यायः शास्त्रस्य स्वोत्तरभाविना लौकिकेन निर्णयेन बाधनार्थं न प्रवर्तते, शास्त्रबाधने लोकनिर्णयस्यासामर्थ्यात्। नीतिप्रयोगस्य क्षणे क्षणे नवीनमूहनं नीतिविदां गुरुमन्तरा नान्येन कर्तुमशक्यम्, "दण्डनीतिं वक्तृप्रयोक्तृभ्य" इति विधानात्, लोकस्य साधारणस्याशक्तत्वाच्च इति। एतत्प्रसङ्गे मल्कृतेदमपि विधीयते यद्विद्या अधीत्यापि उत्तरे वयसि नित्यं विद्यावृद्धसंयोगो नीतिविदा कार्य इति।

## इतिहासादिव्याख्या

तदानीन्तनीयं व्यवस्था हस्त्यश्वादिविद्याध्ययने दिवसपूर्वभागे, पश्चिमभागे इतिहासश्रवणे आत्मा नियोजनीयः। तथाकृते सति अन्नं जीर्णं भवति। इतिहासः पुराणेतिवृत्ताख्यायिकोदाहरणधर्मशास्त्रार्थशास्त्रेषु पर्याप्त्या सङ्केतितः। तत्र पुराणं सृष्ट्यादिज्ञानफलम्। इतिवृत्तं भूतपूर्वाणां चरित्रम्। एकसमये चक्रवर्तिनोरसम्भवाद् भूतपूर्वनिवेशः। आख्यायिकोदाहरणं पञ्चतन्त्रादि। तेन सृष्टिकालादारभ्य अद्यावधि अनुस्यूतः पशुषु विद्यमानो धर्मो नासुग्रहः। 'यथा शुनो निद्रा तथा राज्ञा निद्रा गृहीतव्या' इति। इतिहासोऽपि पुराणोल्लिखितः प्रमाणम्। अतस्तस्य पुराणे सङ्ग्रहः कृतः। पुराणस्य नीतौ तात्पर्यं नास्ति इति ज्ञात्वा इतिवृत्तस्य पृथग् ग्रहणम्। तथा कार्यकारणभावघटकव्याप्तिनिर्णयाय दृष्टान्तत्वेन इतिहासस्योपयुक्तता ज्ञेया।

## पुराणसम्बन्धिहाजरामतखण्डनम्

पुराणस्य धर्मप्रतिपादकत्वं "पुराणन्याय" इति याज्ञवल्क्यवचनात्, "सृष्टिप्रवृत्ती" इति जयमङ्गलोद्धृतवचनाच्च सिद्धम्। श्रीमद्भागवतेऽपि "मन्वन्तराणि सद्धर्मम्" इति व्याख्यानाद् उक्तार्थस्य संवादित्वमेव। ईशतत्त्वस्य प्राधान्येन प्रतिपादनपरेभ्यः पुराणेभ्यो धर्मशास्त्रस्य जीवस्वरूपविशुद्धिप्रयोजनकस्य पार्थक्येऽपि पुराणस्य धर्मप्रति-पादकत्वमव्याहतमेव। अत्र केचिदाहुः—पुराणं प्राचीनसमये सर्गप्रतिसर्गादिपञ्चलक्षण-बोधकमासीत्। आधुनिकेषु पुराणेषु तु क्वचिद् धार्मिकसामाजिकविषया अपि प्रक्षिप्ताः। यदा प्रभृति धर्मबोधकत्वमेतेन साधितम्, तदा प्रभृति उपपुराणानां लक्षणं सर्गाद्यभूत्। पुराणे ऐतिहासिकीं दृष्टिमुपेक्ष्य कल्पनैवाश्रिता। तेनेदं सिद्धं भवति

यत्पुराणप्रतिपाद्यविषयो धर्मो नासीदिति । अत एव पुराणानां दशकलक्षणानि परिभाषैव इति । अन्ये तु पुरातनत्वं पुराणत्वमिति तल्लक्षणम् । अतः कोऽपि विषयः पुरातनः पुराणप्रतिपाद्यो भवितुमर्हतीति ।

अत्र विमृश्यते—सृष्टिप्रवृत्त्यादि लक्षणं जयमङ्गलोद्धृतं पूर्वपरम्पराप्राप्तम् । अतो धर्मादिनिरूपणस्य उक्तलक्षणघटकत्वात् तद्विरोधिनवीनमतमसूयाबहुलमिव भाति । किञ्च, पुराणोक्तानां आख्यानत्वेन वेदोक्तत्वेन वा प्रामाण्यमिति विमर्शे प्रथम-पक्षे आत्माश्रयो दोषः । द्वितीयपक्षस्तु इष्यत एव । कौटल्यभाष्यकृता सृष्ट्यादिप्रति-पादकत्वं प्रामाण्यं च पुराणानां परिचायकमिति वदता जयमङ्गलायां यद् वाक्यं स्मर्यते, तत्र स्थितेर्ग्रहणं कृतम् । तच्च जगत्परिपालनविषयम् । अत एव तदन्तर्गततया धातुवादा-दयोऽप्यत्रोक्ताः । तस्माद् वंशानुचरितस्य भूमिसंस्थानत्वेन व्याख्यानमाधुनिकानाम-युक्तमेव । श्रीमद्भागवत उक्तानि दशलक्षणानि सृष्ट्यादिपञ्चविधलक्षणेन विरुद्धानि इत्यपि न, अनेकेषां लक्षणानां सम्भवात् । एतेन जयमङ्गलोद्धृतवचनप्रामाण्यात् पुराणे धर्मनिरूपणमर्वाक्कालिकमिति कथनं परास्तम् ।

## धर्मस्य लोकस्थितिहेतुत्वम्

ननु पुराणेषु धर्मनिरूपणस्य परम्पराप्राप्तत्वेऽपि तस्य लोकस्थितिहेतुत्वं कथं मन्तव्यम् । यतो वेदाध्ययननिषेधमुखेनैव शूद्रा धर्मज्ञानेभ्यो वञ्चिताः । इष्टापत्तौ ते कर्तव्यज्ञानशून्याः स्युः । तन्न, पुराणद्वारा वेदोदितं धर्मं ते ज्ञातुमर्हा एव । न च एते धर्मशास्त्रमेव कुतो न पठेयुः ? धर्मशास्त्रे तन्निषेधश्रवणात् । न चैवं शूद्राणां कृतेऽयं निषेधः किं मूल इति शङ्क्यम् ? समाजान्तर्गतानां तेषां तेषां मतितारतम्यानुसारेण लाघवसौष्ठवे बुद्ध्वा वाङ्मयश्रवणादिमर्यादा मूलतया स्थापिता, यथा मीमांसान्यायं तदितरशास्त्राणि महता श्रमेण निष्कारणं वेदं च ये अधीतवन्तस्त एव धर्मशास्त्रे अधिकृताः, तत्रत्यानां वचनस्य समन्वयस्य अधीतवद्भिरेव कर्तुं शक्यत्वात् । एतत्समन्वय एकाग्रो विदग्धो मीमांसकः समर्थः । तस्य मनोरञ्जनमपि विवादेन वचनसमन्वयपूर्व-केणैव भवति । कारवः शिल्पादिकर्त्तारः कोमलहृदया न वादं कर्तुमर्हा इति तथा-विधानां मनोरञ्जनाय पुराणश्रवणं विहितम् । एवञ्च यथा विद्वानेव तत्तत्पदे नियोज्यते राजनीत्या, तथा धर्मशास्त्रश्रवणाधिकारविषयेऽपि ज्ञेयम् । नन्वेवं धर्मशास्त्रेऽधिकृता अनाचारान्न निवृत्ता इति इतिहासतो ज्ञायते ? सत्यम् । ये अनाचाराः समस्तलोक-सम्मता बभूवुस्तेषां पालनं न दृष्टदोषावहम् इति राजनीतिमतम् । सत्यप्येवं लोको

यदि अनाचारान्निवर्तयितुं कश्चन प्रभवेत्, तदा तु अनाचारनिषेधो भवितुमर्हः। तत्र राजनीत्या प्रयत्नो विधेयः।

### इतिवृत्ताख्यायिकोपयोगः

चक्रवर्तिपदेऽधिष्ठानम् एकदा एकस्यैव सम्भवति, तेनासम्भावनाविपरीतभावनयोर्निरासार्थं पूर्वजानां राज्ञामितिहासेनैवेतिवृत्तं ज्ञातव्यं भवतीति इतिवृत्तं पृथग्वर्णितं पूर्वोक्तं स्मर्तव्यम्। नीतिवर्णितस्य साध्यसाधनभावस्य निर्णयाय इतिहासे दृष्टान्ततया जागरूकेऽपि विधेये कर्मणि स्वकृतिसाध्यत्वमनवगतमेव भवति, अतस्तदवगमाय पृथक्तया तन्त्राख्यायिकोक्ता। तत्र पशूनां चरित्रं प्राधान्येन स्वाभाविकं वर्ण्यते, तेन कृतिसाध्यतानिर्णयो नाशक्यः। यथा शुनो निद्राभङ्गः, अश्वानां ह्रेषास्वन इत्यादि उक्तमेव। क्वचिदैतिहासिकेषु यदा उपपत्तिर्न ज्ञायते, तदानीं तेषां निर्णयाय लोकप्रसिद्धाऽऽख्यायिकाऽपि युज्यते। अत्रोदाहरणं ४४७ पृष्ठे द्रष्टव्यम्। पशूनामुदाहृतिर्मानवेन कथमनुकार्या इति तु न शङ्क्यम्, मनुष्यः पाशवं सर्वविधं कर्म कर्तुं शक्त इति वैज्ञानिकैः शारीरके निर्णीतत्वात्।

### धर्मशास्त्रसार्थक्यम्

यद्यपि पुराणेनैव धर्मशास्त्रमन्तर्गतं भवति, तथापि पुराणश्रवणे तर्ककर्कशमतयो न प्रवर्तन्त इति तेषां बोधाय धर्मशास्त्रग्रहणं कृतम्। पुराणसार्थक्यमुक्तमेव इत्येव अधिकारिभेदेन धर्मशास्त्रपुराणयोः सार्थक्यान्नैकस्य वैयर्थ्यम्।

किञ्च, पुराणप्रतिपाद्यस्य ईश्वरस्य प्रसादाय पुराणे धर्मो निरूपितः। धर्मशास्त्रेणापि स एव निरूप्यते, तेनेदं स्पष्टं यत् पुराणसमवेतं ज्ञानमेव धर्मशास्त्रेणोपजीव्यते, तेन धर्मशास्त्रव्यपदिष्टो धर्मः सत्त्वभागित्युक्तं भवति। सत्त्वञ्च ज्ञानप्रभायामानन्दप्रभासंयोगः। तावतापि जीवः शक्तिमान् नोच्यते, अतः कृतिसाध्यतानिर्णयोऽप्यपेक्ष्यते। तन्निर्णयाय पुराणे आख्यायिका, इतिहासः, इतिवृत्तम्, धर्मक्रिया च निरूप्यन्त इत्यलम्।

### विद्यासामर्थ्यम्

विद्यावृद्धसंयोगेन सर्वशास्त्राभिगमनम्, ततः प्रज्ञाष्टाङ्गा, ततो योग उत्साहः, अभिनिवेशपर्यवसायी तर्को वा, तत आत्मवत्ता आत्मसम्पत्, ततः परं स्वहितकर्तृत्वं सफलं भवति। यदि आत्मनि इमान् गुणान्नादधीत राजा, तदा तु राजद्वारा यथोचितनिग्रहानुग्रहसामर्थ्याभावेन राज्ञोऽस्तित्वमसत्प्रायं मन्तव्यम्।

अत्रेदं चिन्त्यम्—भारतीयविद्याध्ययने योगस्योपलब्धौ ईप्सितार्थानां प्रियमोद-प्रमोदानां सङ्गमनाद् गुरुभर्तृप्रसादाद् विश्वास्यत्वाद् अभिरूपभोगात् फलावश्यम्भावाद् बन्धुतृप्तेः सुभोजनाद् भारतीयनीतौ हर्षसामग्री पूर्णा वर्तते। विद्यान्तरे स्वयं लाभो नियतो नास्तीति चतुर्विधविद्यायामाह्लादजनकत्वसामर्थ्यं संस्मरणीयम्। एवं-रीत्या विद्याविनीतो भूत्वा आन्वीक्षिक्यादिना राजा प्रजायां विनयमुपदिशति, तर्ह्येव स उपदेशः कार्यपर्यवसायी भवति। विनयभावे प्राप्ते देवतानामधिष्ठानं राजशरीरम्। ततः प्रजाऽपि राजाऽऽज्ञां शिरसा वहति। तथाविधेन राज्ञा प्रणीतो दण्डोऽपि दण्ड्ये ग्लानिमपराधं प्रति उत्पादयति तत्सत्त्व एव स अपराधाद् निवर्तते, इत्येवंरीत्या प्रजायां विनये संवृत्ते राजा पृथ्वीं भुङ्क्ते, पालयति चेति शम्।

**विश्वनाथशास्त्रिदातारः**

# विषयानुक्रमणिका

## कौटलीयार्थशास्त्रस्थमूलस्यानुक्रमणिका

### प्रथमोऽध्यायः

#### शास्त्रोद्देशः १–६९



### प्रथमं प्रकरणम्

### द्वितीयोऽध्यायः

#### विद्यासमुद्देशः

#### आन्वीक्षिकी-स्थापना ( राजवृत्तिः ) ७२-१६८

## तृतीयोऽध्यायः

### (त्रयीस्थापना) १७२-३५८



## चतुर्थोऽध्यायः

### ( वार्तादण्डनीतिस्थापनम् ) ३६६-३८६



## द्वितीयं प्रकरणम्

### पञ्चमोऽध्यायः ( वृद्धसंयोगः ) ३८७-४५२





## श्रीमूलाया विषयानुक्रमणिका

### प्रथमोऽध्यायः

### शास्त्रोद्देशः १-६९



### प्रथमं प्रकरणम्

### विद्यासमुद्देशः

### द्वितीयोऽध्यायः (आन्वीक्षिकी-स्थापना) ७२-१६८

तृतीयोऽध्यायः (त्रयीस्थापना) १७२-३५८



चतुर्थोऽध्यायः ( वार्तादण्डनीतिस्थापने ) ३६६-३७१



द्वितीयं प्रकरणम्

वृद्धसंयोगः

पञ्चमोऽध्यायः ३७७-४५१

# वैदिकसिद्धान्तसंरक्षिण्या विषयानुक्रमणिका

## प्रथमोऽध्यायः

### शास्त्रसमुद्देशः १-६८



## द्वितीयोऽध्यायः ( आन्वीक्षिकी-स्थापना ) ७२-१७०

## तृतीयोऽध्यायः ( त्रयी-स्थापना ) १७२-३५९

## चतुर्थोऽध्यायः ( वार्तादण्डनीतिस्थापने ) ३६६-३८२

## द्वितीयं प्रकरणम्

### पञ्चमोऽध्यायः ( वृद्धसंयोगः ) ३८७-४५२





# जयमङ्गलाया विषयानुक्रमणिका

## प्रथमोऽध्यायः

### शास्त्रोद्देशः १२—७०



## द्वितीयोऽध्यायः

### आन्वीक्षिकीस्थापना ७५—१७०

